भक्तस्य यस्य नेत्राभ्यां स्रवन्त्यश्रूण्यनर्गळम् ।
दृश्यं पटलनिर्मुक्त इव देवं स पश्यति ॥ २७

*　　*　　*

धनवृद्धो वयोवृद्धो विद्यावृद्धश्च यो नरः ।
अधिकारेण वृद्धो वा सकाशे तत्त्वविद्गुरोः ॥
बालो यथा प्रवर्तेत नो चेद्बोधो न लभ्यते ॥ २८

*　　*　　*

तरणे स्वस्य चान्येषां तारणे भवसागरात् ।
क्रियमाणः प्रयत्नो हि प्रोक्तो धर्मस्सनातनः ॥ २९

*　　*　　*

देहेन्द्रियाणां नाशेऽपि नाशो नैवात्मनस्त्विवति ।
ज्ञानेनानन्दलाभस्तु प्रोक्तो धर्मस्सनातनः ॥ ३०

*　　*　　*

बहुलोहकृतानेकपात्रेषु निहिते जले ।
प्रतिबिम्बितमेकं हि सूर्यं जानन्ति मानवाः ॥ ३१

एवं विविधजन्तूनां हृदयस्थितमीश्वरम् ।
एकमेव विजानीयादेष धर्मस्सनातनः ॥ ३२

*　　*　　*

सत्यस्य जीवितस्य स्यात्परिणामोऽमृतोपमः ।
असत्यस्य तु तस्यासौ विषप्रायस्सतां मतः ॥ ३३

जीवितं पाण्डुपुत्राणां कौरवाणां च पश्यत ।
ज्ञातुं शक्यमिदं सत्यं विस्पष्टं साधकोत्तम ॥ ३४

*　　*　　*

न्यायाधिपतिबुद्धिश्च बुद्धिश्च न्यायवादिनः ।
इति बुद्धिर्द्विधा प्रोक्ता तत्राद्या साधुसम्मता ॥ ३५

स्वपक्षस्थापनार्थाय न्यायवादी प्रवर्तते ।
न्यायाधिपस्तु धर्मात्मा सत्पक्षमवलम्बते ॥ ३६

*  *  *

पाकस्य रुचिमुद्दिश्य प्रष्टव्यो नैव पाचकः ।
भोक्तृदर्शनमात्रेण ज्ञायते तस्य सौष्ठवम् ॥ ३७

प्रष्टव्या नैव गुरवो ज्ञातुं तद्योग्यतां प्रति ।
शिष्यदर्शनमात्रेण बुधैर्विज्ञायते हि सा ॥ ३८

*  *  *

एकस्मिन्नेव धर्मे वा गुरौ संत्येऽथ दैवते ।
दृढो न यस्य विश्वासो गतिस्तस्य प्लवद्वये ॥ ३९

*  *  *

वृत्तयश्चाथ संकल्पा गुणा वा वासनास्तथा ।
यावन्न विलयं यान्ति स्वान्तःकरणसंस्थिताः ॥ ४०

तावत्सनातनं ब्रह्म प्राप्तुं नास्त्येव योग्यता ।
इति मत्वा नरो यस्स्यात्तीव्रसाधनतत्परः ॥
सनातनस्य धर्मस्य तत्त्वज्ञस्स भवेद्ध्रुवम् ॥ ४१

*  *  *

भ्रातर्मानवसेवा हि श्रेष्ठो धर्मः प्रकीर्तितः ।
किं तु मानससेवां त्वं श्रद्धया प्रथमं कुरु ॥
ततो मानवसेवायां निष्णातो हि भविष्यसि ॥ ४२

*  *  *

अन्तर्बहिश्च सन्द्रष्टुं यदीच्छसि परात्परम् ।
तदाऽन्तश्च बहिश्च त्वमेकरूपो भवानघ! ॥ ४३

बहुरूपो भवेद्यस्तु बाह्याभ्यन्तरवृत्तिषु।
अन्तर्हितो भवेत्तस्य समदृष्टिर्महेश्वरः ॥ ४४

*  *  *

सङ्कल्पास्सन्ति नास्माकं चित्ते नापि च वृत्तयः ।
परं तु शान्तिः सौख्यं च नास्माभिरनुभूयते ॥ ४५

इत्येवं कथ्यते कैश्चिद्यत्तत्सत्यं वचो न हि ।
सूर्यचन्द्रौ न दृश्येते निर्मलेऽपि विहायसि ॥ ४६

इत्युक्तिः किं यथार्था स्यत् भवेदेव सुखोदयः ।
निस्सङ्कल्पे च विमले हृदये शान्तिशोभिते ॥ ४७

* * *

तुच्छसौख्यपरित्यागाद्विवेकी नित्यसौख्यदम् ।
ज्ञानं लब्ध्वा परेभ्योऽपि ददाति सुखमव्ययम् ॥ ४८

तुच्छसौख्याभिलाषी तु विवेकरहितो जनः ।
बहुप्राणिवधेनापि तृप्तिं नाप्नोति पश्यत ॥ ४९

* * *

त्यजन्नेकैकशोऽनात्मवृत्तीर्मनसि संस्थिताः ।
आत्मसान्निध्यमाप्नोति सोपानारोहणक्रमात् ॥ ५०

सर्ववृत्तिपरित्यागात् प्राप्य सोपानमन्तिमम् ।
साधकस्समवाप्नोति मोक्षसौधोपरिस्थितिम् ॥ ५१

* * *

अगाधे च निराधारे कूपे निपतितो जनः ।
स्वयं ततो बहिर्गन्तुं न शक्नोति यथा तथा ॥ ५२

करयोः पादयोश्चैव दृढं बद्धोऽपि मानवः ।
स्वयं बन्धाद्विमोक्तुं स्वं प्रभुर्नैव भवेत्तथा ॥ ५३

मोक्षप्राप्तिरशक्या हि देवस्य करुणां विना ।
ततस्तस्य कृपां लब्धुं यतध्वं परमेशितुः ॥ ५४

* * *

सूर्येऽधःस्थे प्रभाते नश्छाया दीर्घा विलोक्यते ।
नभस्युच्चैर्गते तस्मिन् ह्रस्वा भवति सा पुनः ॥ ५५

मध्याह्ने तु लयं याति स्वस्मिन्नेवं मनस्यपि ।
प्रपञ्चाभिमुखे जाते माया दीर्घा विलोक्यते ॥ ५६

अथ शास्त्रविचारेण स्वानुष्ठानेन मानसे ।
ऊर्ध्वगे तु क्षयं याति क्रमात्प्रकृतिरन्ततः ॥
नात्मनः पृथगाभाति पूर्णबोधस्थितौ जगत् ॥ ५७

* * *

श्रियं स्त्रियं च यावन्न जेतुं शक्नोति मानवः।
तावन्नाप्नोति हि श्रेयो जित्वा निश्श्रेयसं व्रजेत् ॥ ५८

* * *

वशीकर्तुं वनगजं शृङ्खलाऽपेक्ष्यते यथा ।
तथा मनो वशीकर्तुं जपमालाऽप्यपेक्ष्यते ॥ ५९

गजः शृङ्खलया बद्धो वशमेति द्रुतं यथा ।
तथा जपेन सम्बद्धं चित्तं ब्रह्मगतं भवेत् ॥ ६०

* * *

पुस्तकाध्ययनं सर्वं धारणायैव मस्तके ।
तदुक्तानां च धर्माणामनुष्ठानार्थमेव हि ॥ ६१

आरोग्यं विन्दते रोगी वैद्योक्तं पथ्यमौषधम् ।
संसेव्य तद्वत्संसारी श्रेयो धर्मानुवर्तनात् ॥ ६२

* * *

फलं बीजानुसारि स्यान्न कदाऽपि पृथग्भवेत् ।
तथैव च मनोवृत्तिमनुसृत्य नरः फलम् ॥
लभते तदिदं ज्ञात्वा पूतवृत्तिर्भवेत्सदा ॥ ६३

* * *

रोगी वैद्यालयस्थोऽपि पथ्यौषधविवर्जितः ।
रोगाद्विमुक्तिं नोपैति तद्वत्पुण्याश्रमे वसन् ॥ ६४

साधनं सदनुष्ठानं चापहाय जडाशयः ।
भवान्न मुच्यते नैति शान्तिं ज्ञानं प्रसन्नताम् ॥ ६५

* * *

दृश्यदर्शनपर्यन्तं बन्धस्त्वामनुवर्तते ।
दृश्यस्य स्फुरणे नष्टे नष्टं बन्धं च भावय ॥
ततो दृश्यविनाशार्थं साधनानि समाचर ॥ ६६

* * *

शोधनेऽक्षरदोषाणां यथा पुस्तकमुद्रणे ।
भूयो भूयो विलोक्यन्ते दोषाः शोधकपण्डितैः ॥ ६७

तथैव क्रियमाणेऽपि शोधने मनसो भृशम् ।
पुनः पुनश्च दृश्यन्ते दोषास्तत्र विवेकिभिः ॥ ६८

* * *

कृतेऽपि सुष्ठु कर्तव्ये फलं यदि न लभ्यते ।
तदैव प्राक्तनं कर्म भावयेद्बलवत्तरम् ॥ ६९

किमप्यकृत्वैवास्माकं कर्मेदृशमिति ब्रुवन् ।
जनस्तु धर्मतत्त्वज्ञो न भवत्येव सोदर! ॥ ७०

कृतेऽपि यत्ने वैफल्यं दैवहेतुकमुच्यताम् ।
अन्यथा तादृशालापो दैवद्रोहो भवेत्खलु ॥ ७१

* * *

लघुर्यस्तूलवत्सोऽपि सत्यनिष्ठो भवेद्यदि ।
महामेरूपमबलो भवत्येव न संशयः ॥ ७२

मेरुवत्सारयुक्तोऽपि सत्यहीनो जनो भुवि ।
तूलवल्लाघवं याति शृणु सत्यमिदं वचः ॥ ७३

* * *

व्याधिश्शरीरे यस्य स्यादशान्तिश्चापि मानसे ।
स धर्ममुपदेष्टुं वा ध्यातुं वा परमेश्वरम् ॥ ७४

ज्ञानवानप्यशक्तः स्यात् तद्वदज्ञानदूषितः ।
मनश्चापल्ययुक्तश्च देवे स्थापयितुं मनः ॥
तत्त्वं तदुपदेष्टुं वा योग्यो नैव भवेद्भुवि ॥ ७५

* * *

धनं संपादितं पापकर्मणा केनचिद्यदि ।
पुण्यात्मना तदन्येन धर्मार्थं विनियुज्यते ॥ ७६

पुण्यमेव धनं तत्स्यात्; पुण्येनाप्यार्जितं धनम् ।
पापिना विनियुक्तं सत् पापस्वं भवति ध्रुवम् ॥ ७७

* * *

युक्ताहारो विविक्ते च वासोऽथ ब्रह्मचिन्तनम् ।
इति रत्नत्रयं नैव त्यजेदाजीवितं भुवि ॥ ७८

* * *

आरूढस्थितिसंसिद्धिपर्यन्तं साधको जनः ।
अनुष्ठानं त्यजेन्नैव सच्छास्त्रप्रतिपादितम् ॥ ७९

* * *

ब्रह्मनिष्ठापरा यावत्सत्ये धर्मे च निष्ठिताः ।
तावदेव तदुक्तानि फलन्ति वचनान्यपि ॥ ८०

* * *

परमाणुषु सर्वेषु भगवान् भाति यद्यपि ।
अप्राकृतं दिव्यचक्षुर्विना नैवावलोक्यते ॥ ८१

* * *

सर्वत्र सर्वकालेषु निर्भयं जीवितुं भवान् ।
यदीच्छति तदा सत्यमवलम्बस्व सन्ततम् ॥ ८२

* * *

सर्वात्मना च कामादीन् यो जयेत्प्रकृतेर्गुणान् ।
आत्मसाम्राज्यसंसिद्धिमाप्नोति स दृढव्रतः ॥ ८३

* * *

मदीयं जीवितं सर्वं नियमान्वितमस्त्विति ।
यदा स्याद्दृढसंकल्पस्तदोदेति मनुष्यता॥ ८४

* * *

देहेन्द्रियादिसौख्येषु यावत्सक्तो नरो भवेत् ।
तावद्बद्धश्च दैवस्य दूरस्थश्च भवेद्ध्रुवम् ॥ ८५

* * *

आलस्यं हि मनुष्याणां कारणं स्यादधोगतेः ।
सोऽहंपरत्वं हेतुः स्यात्तेषामुच्चैर्गतेस्तथा ॥ ८६

* * *

असमग्रं कृतं कार्यं दद्यात्तत्सदृशं फलम् ।
समग्रं चेत्कृतं तत्तु समग्रफलदं भवेत् ॥ ८७

* * *

तैलेन साकं दीपस्य सम्बन्धो यादृशो भवेत् ।
तादृशो ब्रह्मचर्यस्य चाहारेण सहानघ ॥ ८८

* * *

भक्त्या त्वनन्ययाऽस्माकमहंकारो विनश्यति ।
सद्गुरोस्सेवयैवेह साधुधर्मोऽवगम्यते ॥ ८९

* * *

इन्द्रियाणां वशे तिष्ठन् पशुत्वमुपगच्छति ।
वशीकृत्य च तानि स्यान्नरः पशुपतिर्भुवि ॥ ९०

* * *

अनित्यं देहसौख्यं तु यो न कामयते जनः ।
न कदाऽपि च तच्चित्ते क्रोधो भवति सुव्रत!॥ ९१

* * *

अनावृष्टिहते देशे जीवितं यादृशं भवेत् ।
रात्रौ चन्द्रविहीनायां सञ्चारो यादृशो भवेत् ॥ १२

शरीरे रोगसम्पूर्णे जीवनं यादृशं भवेत् ।
शान्तिं विना नरस्यापि जीवितं तादृशं स्मृतम् ॥ १३

* * *

शान्त्या कोपं प्रशमयेज्जलेनाग्निं यथा तथा ।
जयेत्सत्येन चासत्यं धर्मेणाधर्ममेव च ।।
आलस्यं श्रद्धया चैव श्रेयोऽर्थी सन्ततं नरः ॥ १४

* * *

यत्र कुत्रापि वा कार्ये स्वधनस्य व्ययादपि ।
धर्मकार्योपयोगार्थं परैर्दत्तस्य दातृभिः ॥
व्यये दशगुणं धर्मधनस्य स्यात्समाहितः ॥ १५

* * *

उपकारस्य करणं परेषां प्राणिनामिह ।
परत्र ब्रह्मसायुज्यं लक्ष्यं मनुजजन्मनः ॥ १६

* * *

कर्तव्यमेव यत्किंचित्कर्म पापविवर्जितम् ।
सर्वैरपि जनैर्लोके जीवितुं श्रद्धयाऽन्वितैः ॥ १७

* * *

दृश्यन्ते बहवो लोके भक्ता भगवतो हरेः ।
परं तु विरळास्ते ये तत्कृपापात्रतां गताः ॥ १८

* * *

दृश्यस्याभिमुखीभूते स्वान्तःकरणदर्पणे ।
दृश्यं हि दृश्यते नैव स्वस्वरूपं कदाचन ॥ १९

* * *

स्वस्य दोषान् परेषां च गुणान् यः ख्यापयत्यसौ ।
उत्तमः पुरुषः प्रोक्तो विपरीतस्तु दुर्जनः ॥ १००

* * *

मधुरा अपि तिक्ताः स्युः पदार्था विषयोगतः ।
शास्त्रीयमप्यशास्त्रीयं तमोगुणवशाद्भवेत् ॥ १०१

योगादीनामनुष्ठानं वैराग्यरहितैः कृतम् ।
ऊषरक्षेत्रविहितं कृषिकर्मेव निष्फलम् ॥ १०२

* * *

प्रशान्तमेव वचनं वक्तव्यं प्रीतिपूर्वकम् ।
अमृतादपि तद्वाक्यं मतं सारतरं बुधैः ॥ १०३

* * *

गते विकासं विज्ञाने देवत्वं याति मानवः ।
तस्मिन् क्षीणे तु संयाति मृगत्वमिति बोधत ॥ १०४

* * *

यथा च विषसम्पर्कात् स्मृतिहीनो भवेन्नरः ।
तथा विषयसम्पर्कात् स्वबोधरहितो भवेत् ॥ १०५

* * *

गुणैकग्रहणे सक्ता ज्ञानदृष्टिरितीर्यते ।
अज्ञानदृष्टिरित्युक्ता दोषैकग्रहणे रता ॥ १०६

विज्ञानदृष्टिस्सा स्याद्या दैवं पश्यति सर्वतः ।
इत्थं दृष्टेस्त्रयो भेदास्तत्त्वज्ञैः परिकीर्तिताः ॥ १०७

* * *

निर्मला दैवभक्तिश्च सेवा च प्राणिसन्ततेः ।
इहामुत्र च सौख्यानां मार्गाविति विदुर्बुधाः ॥ १०८

* * *

तरणं स्वस्य चान्येषां तारणं भवसागरात् ।
यदस्ति तदिह प्रोक्तस्सद्भिर्धर्मः सनातनः ॥ १०९

* * *

अलसत्वं सदा देहसौख्यमेव प्रतीक्षते ।
दूरीकरोति तत्सोऽहंपरत्वमिति भावय ॥ ११०

* * *

तव पुण्यं विनष्टं स्यात् परवस्तुपरिग्रहात् ।
परेषां किल्बिषं यच्च त्वामाक्रामति तद्ध्रुवम् ॥ १११

कामक्रोधादयो दोषा मनश्चाञ्चल्यमेव च ।
भवन्तं पीडयिष्यन्ति वृद्धिं गत्वा ततोऽधिकाम् ॥ ११२

* * *

आत्मज्ञानामृतं पीत्वा प्राप्तो निर्विषयस्थितिम् ।
योगी विषयसर्पैर्न भीतिं विन्दति कुत्रचित् ॥ ११३

* * *

मनो गृहे मठे देहं यस्स्थापयति साधकः ।
तस्य शान्तिः सुखं चैव न कदाऽपि च सिध्यतः ॥ ११४

* * *

यः स्थापयति विज्ञानी गेहे देहं मनो मठे ।
स शान्तिं च सुखं चैव सदा समधिगच्छति ॥ ११५

* * *

कारुण्येन च काठिन्यं लोभं त्यागेन सर्वदा ।
वैराग्येण जयेद्रागं प्रकाशेन तमो यथा ॥ ११६

* * *

अमृतत्वेन मृत्युश्च प्रेम्णा द्वेषविमूढधीः ।
पारिशुद्ध्येन मालिन्यं भक्त्या तापत्रयानलः ॥
शान्तिं गच्छन्ति सहसा वर्षेणेव दवाग्नयः ॥ ११७

* * *

स्वजीवनस्य यात्रायां क्लेशो नान्यस्य जीविनः ।
यथा भवेत्तथा जीवेद्धर्मोऽयं परमो मतः ॥ ११८

* * *

परेभ्यः स्वेन न कृतं स्वानुभूतेरगोचरम् ।
अनुष्ठानं तथा ज्ञानमभ्यासं च न बोधयेत् ॥ ११९

* * *

विरक्तिः सुदृढा यस्य संभवेदैहिके सुखे ।
तस्यैवात्मसुखप्राप्तिर्भवेन्नान्यस्य सोदर ॥ १२०

* * *

यदि त्वमात्मनिष्ठस्सन् प्रकृतिं जेतुमिच्छसि ।
दूरीकुरु तदाऽऽलस्यं तथैवाजागरूकताम् ॥ १२१

* * *

चित्तेऽतिनिर्मले जाते चिन्ताविरहिते स्थिते ।
आत्मनो दर्शनं कर्तुं शक्यते नान्यथाऽनघ! ॥ १२२

* * *

यद्यप्यादौ जीवितं स्यादलसस्य सुखावहम् ।
आत्मापकर्षकं भूत्वा क्रमशोऽथ पराश्रयम् ।
अन्ते मरणपर्यन्तमतिदुःखास्पदं भवेत् ॥ १२३

* * *

निष्ठागरिष्ठैरुत्कृष्टैर्गुरुभिश्शिक्षितं न चेत् ।
चित्तं नोपरतिं याति न चाधीनं भवेत्तव ॥ १२४

* * *

आत्मानं स्वगतं द्रष्टुं यो न शक्नोति मानवः ।
कथं वा सर्वभूतेषु स्थितं तं द्रष्टुमर्हति ॥ १२५

* * *

एकदा पानयोग्यं तु सलिलं प्रददाति यः ।
तस्मै प्रदेयं गोक्षीरं दशकृत्वः सितामयम् ॥ १२६
इति बुद्धिर्भवेद्यस्य कृतज्ञस्स इहोच्यते ।
कृतज्ञ एव देवस्य कृपायाः पात्रतां व्रजेत् ॥ १२७

* * *

प्राप्तेन येन केनापि सन्तुष्टः परमात्मनः ।
प्रसादस्स्यादयं नोचेत्फलं वा पूर्वकर्मणः ॥ १२८

इति विश्वस्य दैवस्य नियतिं योऽनुवर्तते ।
तस्य तृष्णाविहीनस्य मनुजस्याग्रतो भवेत् ॥
अप्येकच्छत्रसाम्राज्यं लज्जया नतमस्तकम् ॥ १२९

*　　　　*　　　　*

अधर्ममार्गात्प्राप्तेन परमान्नेन जीवनात् ।
वरमन्नरसेनैव जीवनं धर्ममार्गतः ॥ १३०

*　　　　*　　　　*

सर्वेषां सम्मतिं लब्ध्वा कर्तुं यत्किञ्चिदप्यहो ।
असाध्यं स्यात्ततः सत्ये स्थिरो भूत्वा दृढव्रतः ।
आत्मीयं सदनुष्ठानं निश्शङ्कं कुरु सर्वदा ॥ १३१

*　　　　*　　　　*

जीवितं भगवद्दत्तं व्यर्थं क्षणमपीह यः ।
न यापयति तस्यैव जागरूकस्य जन्मनि ॥ १३२

अस्मिन्नेवात्मशान्तिश्च दैवप्राप्तिश्च सिध्यतः ।
तीव्रनिष्ठापराणां हि मुक्तिः सन्निहिता सदा ॥ १३३

*　　　　*　　　　*

सिकतारेणुतुल्यस्य पापस्य यदि दीयते ।
अवकाशोऽद्य स श्वस्स्यान्महामेरूपमोऽनघ! ॥ १३४

*　　　　*　　　　*

तपोज्ञानाग्निदग्धाश्चेदन्तःकरणवासनाः ।
दूरीकृता यदि भवेदविद्या बन्धकारिणी ॥ १३५

तदैव जन्मराहित्यं सिध्यतीति विचिन्तय ।
गृहस्य त्यागमात्रेण मुक्तिर्नैवोपलभ्यते ॥ १३६

*　　　　*　　　　*

धैर्येण लोकं ध्यानेन मायां योगेन मानसम् ।
विचारेण च संसारं प्लवेनेवाम्बुधिं तरेत् ॥ १३७

* * *

दहने वृत्तिबीजानां प्राणायामसमोऽनलः ।
नान्यस्सन्दृश्यते तस्मात्प्राणायामपरो भव ॥ १३८

* * *

यच्चित्तं दृश्यविषयसुखमुद्दिश्य धावति ।
तद्द्रष्टरि लयं नैति ब्रह्मसौख्यं न विन्दति ॥ १३९

* * *

यद्यात्मनियमं वाञ्छस्याहारनियमं भज ।
निश्चलध्यानकामी चेद्भज भक्तिं विनिर्मलाम् ॥ १४०

मनोनैर्मल्यकामी चेत्कर्म निष्काममाचर ।
भगवद्भक्तिकामी चेत्कुरु सेवां महेशितुः ॥ १४१

चित्तस्थैर्याभिलाषी चेद्धंसयोगमुपाश्रय ।
मोक्षकामी यदि भवान् ज्ञानस्याभ्यसनं कुरु ॥ १४२

* * *

प्रवेशोऽगाधनिष्ठायामखण्डज्ञानतो भवेत् ।
अहंभावस्य नाशेन सोऽहंभावः प्रजायते ॥ १४३

* * *

ऋणं कृत्वा बहून् भोगान् भुञ्जानमवलोक्य मा ।
संतोषं भज तत्सौख्यमिव तेनाद्य दृश्यते ।
किन्तु कालान्तरे दुःखं दुर्भरं जनयिष्यति ॥ १४४

* * *

स मुनिर्नैव यस्तावन्मौनमास्थाय तिष्ठति ।
सर्वदा मनने सक्तो मुनिरित्युच्यते बुधैः ॥ १४५

* * *

एकान्तं न भवेत्तत्तु यत्र सन्ति न मानवाः ।
सङ्कल्परहिते भावे स्थितिरेकान्तमुच्यते ॥ १४६

*　　　　*　　　　*

संसारी न भवेत्साधुर्यदि संसारिभिर्युतः ।
किन्तु संसारिणः साधुशीलान् कुर्यात्प्रयत्नतः ॥ १४७

*　　　　*　　　　*

सिद्धयो महिमानश्च सन्ति यद्यप्यनेकशः ।
सम्पूर्णा शोकशान्तिश्च नित्यात्मसुखमेव च ।
तावन्न सिध्यतो यावत्प्रकृतिर्न जिता भवेत् ॥ १४८

*　　　　*　　　　*

मालिन्यदूषिते वस्त्रे यथा रङ्गो न सज्जते ।
तथा ब्रह्मविचारोऽपि चित्ते विषयदूषिते ॥ १४९

*　　　　*　　　　*

विधायानुगुणां शिक्षामपराधविधायिनः ।
भूयोऽपराधी न भवेद्यथा कुर्यात्तथैव तम् ।
महोत्तमस्त्वयं प्रोक्तो लोकसंस्करणक्रमः ॥ १५०

*　　　　*　　　　*

अशाश्वतस्य देहस्य रक्षार्थं विनियोजिते ।
काले सकृद्वा दैवस्य जपे ध्यानादिकर्मसु ।
प्रवृत्तिरेव साफल्यहेतुर्मानवजन्मनः ॥ १५१

*　　　　*　　　　*

सत्यस्यान्वेषणं तस्य चानुष्ठानं प्रबोधनम् ।
धर्मस्यान्वेषणं तस्य चानुष्ठानं प्रबोधनम् ॥ १५२

अन्वेषणं च दुःखस्य हेतूनां तन्निवृत्तये ।
विधानं दृढयत्नस्य धर्मः प्रोक्तस्सनातनः ॥ १५३

*　　　　*　　　　*

अन्तःकरणवृत्तीनां सङ्कल्पानां तथैव च ।
गुणानां वासनानां च यावन्न विलयो भवेत् ॥ १५४

तावत्सनातनं ब्रह्म प्राप्तुं नैवास्ति योग्यता ।
इति मत्वा नरो यस्तु साध्यसाधनतत्परः ॥ १५५

तदर्थं दृढचित्तस्सन् जीवितं विनियोजयेत् ।
स सनातनधर्मस्य तत्त्वं जानाति नेतरः ॥ १५६

* * *

पितरौ दैववत्पश्येत् दैवानुग्रहसिद्धये ।
तयोर्न भक्तिर्येषां . ते न प्रयान्ति समुन्नतिम् ॥ १५७

* * *

गृहस्थब्रह्मचर्यादिधर्मपालनतत्पराः ।
गृहस्था एव सुवते लोकोद्धारकसन्ततिम् ॥ १५८

गृहस्थाश्रमसंबद्धा बाल्य एव सुशिक्षिताः ।
पवित्रधर्मनिरता भवेयुर्नात्र संशयः ॥ १५९

* * *

कन्या गुरुकुले विद्यामभ्यस्य शुभवृत्तयः ।
भवेयुर्ब्रह्मवादिन्यो वेदकालाङ्गना इव ॥ १६०

अथवा शारदारामकृष्णाविव गृहस्थताम् ।
आश्रित्यापि पवित्रेण भावेनैव समन्विताः ॥ १६१

सन्ततं भगवद्भक्तिसमाप्लावितचेतसः ।
स्वजीवितान्यर्पयेयुर्लोककल्याणसिद्धये ॥ १६२

नोचेद्गृहस्था भूत्वाऽपि कञ्चित्कालं सुखे रताः ।
कस्तूरीगांधिवत् भूयो ब्रह्मचर्यमुपाश्रिताः ॥
उत्कृष्टवानप्रस्थाः स्युः लोकसेवापरायणाः ॥ १६३

कन्यागुरुकुलस्थानां बालिकानां कृते त्रयः ।
मार्गाः प्रोक्ताः किलैतेषु मार्गेणैकेन गच्छत ॥ १६४

त्यजेताडम्बरं स्वीयजीवितेष्वथ कन्यकाः ।
स्त्रीलोकस्य प्रशस्तं हि शीलं परमभूषणम् ॥ १६५

* * *

लोके कृतार्थतां प्राप्तुं कृतकृत्यो भवेन्नरः ।
कृत्यं येन कृतं सम्यक् कृतकृत्यस्स उच्यते ॥ १६६

कृतकृत्याः कृतयुगे बभूवुर्बहवो जनाः ।
तेन नाम्ना व्यवहृतं तत एव च तद्युगम् ॥ १६७

कलौ कृतयुगं चास्ति कलिश्चास्ति कृते युगे ।
प्रवृत्तिरेव लोकानां कालं लक्षयति स्वयम् ॥ १६८

केचित्कृतयुगेऽप्यासन् कलिलक्षणलक्षिताः ।
अद्यापि कृतकृत्यानां सिद्धा कृतयुगे स्थितिः ॥ १६९

* * *

न कोऽपि हर्तुं शक्नोति दैवदत्तां श्रियं तव ।
गच्छति त्वयि ते छायां निरोद्धुं को भवेत्प्रभुः ॥ १७०

* * *

अरण्यस्था मृगास्सर्वे श्रुत्वा सिंहस्य गर्जितम् ।
प्रधावन्ति यथा तद्वद् 'ओं तत्स'दिति निष्ठया ॥ १७१

वदतो हृदयाद्दूरं यान्ति मानसवृत्तयः ।
पुनर्नूतनवृत्तीनामुदयो न भविष्यति ॥ १७२

* * *

सदा वाङ्नियमे निष्ठा महापुरुषलक्षणम् ।
किं काकवन्मरालानां रटनं कुत्रचिच्छ्रुतम्? ॥ १७३

शान्त्या प्रेम्णा च लोकेऽस्मिन् सत्यतत्त्वं प्रबोधयेत् ।
नोचेत्प्रतप्तं क्षीरान्नमिव तत्तापमावहेत् ॥ १७४

परुषं वचनं हित्वा प्रशान्तं प्रीतिपूर्वकम् ।
यस्तावद्भाषते तस्य वचनं त्वमृतं मतम् ॥ १७५

प्रेममाधुर्यपूर्णेषु सत्सु वाक्येष्वनेकशः ।
अपकीर्तिकरैः क्रूरैर्वचनैः किं प्रयोजनम्? ॥ १७६

* * *

न ब्रूयान्न लिखेत्पत्रं कोपाविष्टे तु चेतसि ।
अन्यथा वैरसंप्राप्तिः क्लेशो वा भवति ध्रुवम् ॥ १७७

* * *

इन्धनानां समृद्ध्याऽग्निः यथा वृद्धिं समश्नुते ।
दयाशान्त्यादिसम्पत्त्या तथा ज्ञानं प्रवर्धते ॥ १७८

* * *

अत्यन्तं विषयासक्त्या चित्ते संक्षुभिते सति ।
साधकेन न कर्तव्यं तपोध्यानजपादिकम् ॥ १७९

* * *

पुष्पोदयेन वृक्षेषु सूच्यते फलसंभवः ।
भक्तिभावोदयेनापि चित्ते ज्ञानोदयस्तथा ॥ १८०

* * *

वृक्षाणां पोषणेनैव फलान्याप्नोति मानवः ।
ध्यानाद्यभ्यसनेनैव लभते ज्ञानसंपदम् ॥ १८१

* * *

रन्ध्रेणैकेन पात्रस्थं जलं सर्वं स्रवेद्यथा ।
इन्द्रियेण तथैकेन ज्ञानं भ्रश्यत्यनिग्रहे ॥ १८२

* * *

ग्रहणेनावृतश्चन्द्रः कान्तिहीनो भवेद्यथा ।
जीवोऽपि माययाऽऽक्रान्तो ज्ञानहीनो भवेत्तथा ॥ १८३

*　　　*　　　*

भावशुद्ध्या विना देहशुद्ध्या किं वा प्रयोजनम् ।
भावसंशुद्धिरेकैव ज्ञानसिद्धिं प्रयच्छति ॥ १८४

योगादिकर्मणा सिध्यत्यात्मशुद्धिस्तु केवला ।
ज्ञानभानुं विना नैव नश्यत्यज्ञानजं तमः ॥ १८५

*　　　*　　　*

दिने दिने वर्धमानं चन्द्रं दृष्ट्वा तमो यथा ।
तथा सत्त्वगुणं दृष्ट्वा जगद्भ्रान्तिर्विनश्यति ॥ १८६

*　　　*　　　*

उत्तमानां गुरूणामप्युपदेशः फलेत्किल ।
उत्तमेष्वेव शिष्येषु नाधमेषु कदाचन ॥ १८७

*　　　*　　　*

गुरुपादावुपाश्रित्य स्थितानामपि सन्निधौ ।
भक्तिविश्वासहीनानां जीवितं स्यान्निरर्थकम् ॥ १८८

गुरोर्दूरतरे देशे स्थितानामपि मानसे ।
भक्तिविश्वासपूर्णानां जीवितं सफलं भवेत् ॥ १८९

*　　　*　　　*

सत्यशीलैः कृतारंभाः संस्था वृद्धिं प्रयान्ति हि ।
स्वार्थबुद्धिभिरारब्धाः सद्यो नश्यन्ति पश्यत ॥ १९०

*　　　*　　　*

चन्द्रस्य प्रतिबिम्बं न दृश्यते मलिने जले ।
तथैव हृदये दुष्टे ब्रह्म नैवावलोक्यते ॥ १९१

*　　　*　　　*

सर्वसल्लक्षणोपेता राजकन्या स्वयंवरे ।
वृद्धान् मूढान् रुजाग्रस्तान् वृणुते न यथा तथा ॥ १९२

हीनान् विषयसंसक्तानज्ञानग्रस्तचेतसः ।
जनान्न मुक्तिकान्ताऽपि वृणुते नात्र संशयः ॥ १९३

*  *  *

ग्रहावेशवशाद्भ्रान्तो विकृतिं याति मानवः ।
तथैव मोहविभ्रान्तः प्रज्ञाहीनोऽपि सोदर! ॥ १९४

*  *  *

यथा च दुर्बलो वृक्षः पवनेनाहतः पतेत् ।
तथा निग्रहहीनोऽपि पतेन्मारशरैर्हतः ॥ १९५

*  *  *

दैवार्पितं नरो यस्तु न करोति स्वजीवितम् ।
कथं स लभते भक्तिं कथमात्मसुखं व्रजेत्? ॥ १९६

*  *  *

पवित्रं चरितं यस्य सत्यसन्धो भवेच्च यः ।
स एवार्हति पूतात्मा काषायाम्बरधारणम् ॥ १९७

*  *  *

क्षीराब्धौ मथ्यमाने तु प्रथमं विषमुत्थितम् ।
अमृतं तु ततस्तद्वत्परतत्त्वस्य साधने ।
क्लेशोऽनुभूयते पूर्वं ततः सुखमवाप्यते ॥ १९८

*  *  *

ज्ञानादिगुणयुक्ताय मुक्तिमीशः प्रयच्छति ।
समर्थायोन्नतं स्थानं ददाति हि महीपतिः ॥ १९९

*  *  *

असत्यं सत्यमिति ये सत्यं चासत्यमित्यथ ।
भावयन्ति न ते सत्यं द्रक्ष्यन्तीह हताशयाः ॥ २००

*  *  *

सन्मार्गे चित्तमाधातुमुपायः कश्चिदुच्यते ।
'हे मनस्त्वं यशस्सौख्यं ननु वाञ्छसि सर्वदा ॥ २०१

तस्यानुकूलं किं कार्यं करो" षीति पुनःपुनः ।
पृच्छेत्तदेवं पृष्टं सत् शुभमार्गेण यास्यति ॥ २०२

*　　　*　　　*

वैराग्ययोगौ जीवस्य गुणौ प्रोक्तौ मनीषिभिः ।
उत्तमैरेव लभ्येते जनैस्तौ नात्र संशयः ॥ २०३

परं तु भक्तिर्ज्ञानञ्च ख्यातौ दैवगुणाविति ।
प्राप्येते तौ जगत्यस्मिन् नरैरेवोत्तमोत्तमैः ॥ २०४

*　　　*　　　*

मठलाभस्तु साधूनां व्यवस्थारहितात्मनाम् ।
गजलाभो दरिद्राणामिव भारावहो भवेत् ॥ २०५

*　　　*　　　*

शैवालं कर्दमो भेकाः सर्पाः पद्मैस्सह ह्रदे ।
सन्त्येव किन्तु पद्मार्थी पद्मान् गृह्णाति नेतरान् ॥ २०६

एवं गुणेषु दोषेषु सत्स्वेकत्र गुणार्थिना ।
दोषास्त्याज्या गुणा ग्राह्यास्समाजेऽस्मिन् विवेकिना ॥ २०७

*　　　*　　　*

जैत्रयात्रागतं वीरं राजानमिव शात्रवाः ।
मोक्षमार्गगतं धीरं निरुन्धन्तीन्द्रियाण्यपि ॥ २०८

विजेतारं प्रभुं शत्रुसैन्यं यद्वत्प्रपद्यते ।
तद्वदेवेन्द्रियानीको जीवन्मुक्तं प्रपद्यते ॥ २०९

*　　　*　　　*

विवेकश्च विरागश्च शमस्संयम एव च ।
ज्ञानाख्यस्य नृपस्यैते चत्वारो ह्यङ्गरक्षकाः ॥ २१०

*　　　*　　　*

व्रणानामुद्भवो देहे दुःखायैव सुखाय न ।
तथैव हृदये दृश्यवृत्तीनामपि संभवः ॥ २११

अपनेतुं व्रणं यद्वत्प्रयत्नं कुरुते जनः ।
तद्वत्प्रयत्नमातिष्ठेद्वृत्तिं नाशयितुं द्रुतम् ॥ २१२

* * *

औषधं सेवितं यद्वन्मितिं त्यक्त्वा विपत्करम् ।
तद्वन्मितिविहीनश्चेद्योगाभ्यासोऽपि हानिकृत् ॥ २१३

* * *

मूलस्य नाशे वृक्षस्य यथा नाशो भवेत्तथा ।
ज्ञानस्यापि विनाशः स्याद्वैराग्यस्य विनाशतः ॥ २१४

* * *

अन्धः स्वपुरतश्चित्रविचित्राणि बहून्यपि ।
स्थितानि वस्तुजातानि द्रष्टुं शक्नोति नैव हि ॥ २१५

तथैव ज्ञाननेत्रेण विहीनो मनुजो भुवि ।
तत्त्वार्थान्नैव जानाति बहुधा बोधितानपि ॥ २१६

* * *

निष्ठाकाले यदा 'नाष्ठा' गृहीता साधकैर्जनैः ।
ततः प्रभृति नष्टाऽभूद्ब्रह्मनिष्ठाऽपि सोदर!॥ २१७

* * *

वृक्षाद्दूरं प्रयातेऽपि बीजे नैव विनश्यति ।
शक्तिस्तदङ्कुरोत्पत्तेर्यावद्बीजं न भर्जितम् ॥ २१८

गृहाद्दूरं गतस्यापि नाभावं जन्म गच्छति ।
अन्तःकरणसंस्कारो न दग्धश्चेत्तपोऽग्निना ॥ २१९

* * *

लोकस्यास्य गतिर्वक्रा सर्पस्येव सदा भवेत् ।
सरळीकरणं तस्यास्त्वशक्यं यदि मन्यसे ॥ २२०

प्रकृतेर्लक्षणं तत्स्यादिति मत्वा सुखी भव ।
बुद्ध्याऽनया सुखं प्रापुर्महात्मानः पुरातनाः ॥ २२१

* * *

वैराग्यं द्विविधं वस्तुगतं भावगतं त्विति ।
द्वितीयं तत्र पूर्वस्मान्मतं श्रेष्ठतरं बुधैः ।
पूर्वं भवेन्मुमुक्षूणां मुक्तानामपरं तथा ॥ २२२

* * *

हृदयं वृत्तिपूर्णं चेदसाध्यं ग्रन्थिभेदनम् ।
न भिद्यते त्वचा युक्तं नारिकेळफलं ननु ॥ २२३

* * *

महिमानमसन्तं यः ख्यापयत्यात्मनो जनः ।
तस्य स्थितोऽपि महिमा वञ्चकं तं विमुञ्चति ॥ २२४

* * *

युद्धकाले समायाते शूरा हृष्यन्ति सैनिकाः ।
किं तु भीता भवन्त्येव नितरां ये तु भीरवः ॥ २२५

कर्तव्ये सति सत्कार्ये मोदन्ते पुण्यजीविनः ।
अलसा दूरतो यान्ति विषादं वा भजन्ति हि ॥ २२६

* * *

परिशुद्धे जले सूर्यः प्रतिबिम्बति सर्वदा ।
सौवर्णं किमिदं पात्रं गाङ्गं वा किमिदं जलम्? ॥ २२७

इति चर्चा तु सूर्येण न कदाऽपि विधीयते ।
न कुलं न धनं नैव विद्यां वा पश्यतीश्वरः ॥ २२८

हृदयं तव शुद्धं वा न वेत्येव परीक्षते ।
तस्मात्त्वं जागरूकस्सन् मनश्शुद्धिमवाप्नुहि ॥ २२९

* * *

रात्रौ नक्षत्रचन्द्रादिप्रकाशोऽपेक्ष्यते जनैः ।
सूर्ये समागते तत्र दृष्टिस्तेषां न गच्छति ॥ २३०

* * *

अज्ञानैकदशायां वै स्फुरन्तीन्द्रियवृत्तयः ।
आत्मोदये पुनर्ज्ञनदशायां न स्फुरन्ति ताः ॥ २३१

महारम्याणि हर्म्याणि निर्मीयन्ते हि कार्मिकैः ।
किं तु ते नोपगच्छन्ति सौख्यं तत्र निवासजम् ॥ २३२

शुष्कवेदान्तिनः केचित् भाषन्तेऽतिमनोहरम् ।
ग्रन्थानपि लिखन्त्येवं परं त्वात्मसुखस्थितिम् ॥ २३३

नैव गच्छन्त्यनुष्ठानलोप एवात्र कारणम् ।
अनुष्ठानपरा भक्ता विरक्ता यान्ति तत्सुखम् ॥ २३४

* * *

सुक्षेत्रेऽपि समुप्तानि सद्बीजानि फलन्ति किम् ?
वृष्टिं विना, तथैवेह तपोध्यानादिकान्यपि ॥
निष्फलानि विना भक्तिं शुद्धेऽपि हृदयेऽनघ! ॥ २३५

* * *

शक्यते मानवैर्लोके क्षीराभावेऽपि जीवितुम् ।
परं तु जीवनाभावे जीवितुं नैव शक्यते ॥ २३६

शर्कराया अभावेऽपि शक्यते जीवितुं जनैः ।
परं तु लवणाभावे जीवनं दुष्करं भवेत् ॥ २३७

पुत्राभावेऽपि लाकेऽत्र सतां शक्यं हि जीवितुम् ।
अनुष्ठानं विना तेषां जीवनं दुर्भरं मतम् ॥ २३८

नेत्राभावेऽपि सुकरं भक्त्यभावे तु दुष्करम् ।
जीवनं भवतीत्येवं ज्ञातव्यं हि विवेकिभिः ॥ २३९

* * *

पश्यत्यायव्ययौ यद्वद्दिनान्ते निपुणो वणिक् ।
तद्वत्स्वस्य परीक्षेत मनोवृत्तिं च साधकः ॥ २४०

आयव्ययावगणयन् व्यापारी नष्टिभाग्भवेत् ।
तथैव स्वमनोवृत्तिमपश्यन् साधकोऽपि च ॥ २४१

* * *

लक्षणावृत्तिरेकैव शिवजीवैक्यबोधिनी ।
ब्रह्मतत्त्वस्य विज्ञानं महावाक्यैकगोचरम् ॥ २४२

योगसाधनमात्रेण चित्तस्योपशमो भवेत् ।
भक्त्या त्वनन्यया नश्येदहङ्कारो न चान्यथा ॥ २४३

अन्तःकरणशुद्धिः स्यान्निष्कामेनैव कर्मणा ।
सद्गुरोस्सेवयैवेह साधुधर्मोऽवगम्यते ॥ २४४

वेदान्ताध्ययनेनैव विकासं याति शेमुषी ।
देशपर्यटनेनैव लोकज्ञानं प्रजायते ॥ २४५

* * *

फलं किमिति पृच्छन्ति केचिन्मानवजन्मनः ।
तत्सामान्यविशेषाभ्यां द्विधा दृष्टं मनीषिभिः ॥ २४६

परोपकार एवात्र सामान्यं फलमुच्यते ।
दुःखहीनदशाप्राप्तिर्विशिष्टं फलमीरितम् ॥
यैर्जिता प्रकृतिस्तेषामेव सिध्यत्यसौ स्थितिः ॥ २४७

* * *

नित्याभ्यासेन वर्धेते विद्या ज्ञानं च सुव्रत!
अनभ्यासात्तदुभयं क्षयं यातीति चिन्तय ॥ २४८

इन्धनानां समृद्ध्या हि ज्वलत्यग्निर्महाशिखः ।
क्षीयते तदभावे च पश्याभ्यासस्य वैभवम् ॥ २४९

* * *

शृणुतैकेन कर्णेन तत्त्वार्थान् श्रुतिबोधितान् ।
अपरेण च दीनानामालापानार्तिचोदितान् ॥ २५०

श्रुत्वा यतध्वं तद्दुःखनिवृत्त्यर्थं दयाळवः ।
पश्यतैकेन नेत्रेण सदा ब्रह्म सनातनम् ॥ २५१

अपरेण च संतापं संसारव्यथितात्मनाम् ।
दृष्ट्वा तत्तापनाशाय प्रयतध्वमतन्द्रिताः ॥ २५२

हस्तेनार्जयतैकेन चैहिकामुष्मिकं धनम् ।
अपरेण च लोकाय दातुं तद्यात सत्त्वरम् ॥ २५३

प्राप्तुं ज्ञांन च विज्ञानं पादेनैकेन गच्छत ।
अपरेण च भक्तेभ्यः प्रदातुं ते प्रधावत ॥ २५४

एतदेव तपः प्रोक्तमिदमार्षं मतं मतम् ।
धर्मस्सनातनश्चापि सोऽयमेव प्रकीर्तितः ॥ २५५

* * *

दृश्यते धार्यमाणा तु पुष्पमाला मनोहरा ।
परं तु क्रमशः क्लान्ता शुष्का भवति सा पुनः ॥ २५६

तथैव यौवने देहो दृश्यतेऽतिमनोहरः ।
संप्राप्ते वार्धके सोऽयं हेयश्च विकृतो भवेत् ॥ २५७

किं त्वत्र धीमता शोकः प्राप्तव्यो न कदाचन ।
येन सूत्रेण सा माला बद्धा तस्य न हि क्षतिः ॥ २५८

तथाऽन्तर्यामिणो नैव विकृतिः परमात्मनः ।
ततश्च स्वात्मनिष्ठानां न दुःखं ज्ञानिनां भवेत् ॥ २५९

देहेन्द्रियादिष्वज्ञानात् रमन्ते ये जना भुवि ।
ते दुःखिता भवन्त्येव देहादीनां क्षतौ पुनः ॥ २६०

* * *

सर्वत्र सर्वं सन्द्रष्टुं नैव शक्नोति मानवः ।
विनाऽपायं नयत्येव नेत्रहीनं तु नेत्रवान् ॥ २६१

सर्वावस्थासु सर्वेषु कालेषु च महोन्नतः ।
सर्वेश्वरो विजानाति सर्वं सर्वज्ञ एव हि ॥ २६२

भूतं भवच्च जनाति भविष्यच्चैव स प्रभुः ।
तमालम्ब्य विनाऽपायं मुक्तिं प्राप्नोति मानवः ॥ २६३

*　　　*　　　*

फलाद्याहारसंप्राप्त्या यथा नन्दन्ति बालकाः ।
नन्दन्ति भूषणप्राप्त्या यथा साधारणस्त्रियः ॥ २६४

धनं प्राप्य यथा लुब्धा हर्षं गच्छन्ति निर्धनाः ।
जिज्ञासवो विरक्ताश्च तथैव ज्ञानबोधकान् ॥ २६५

प्राप्योपदेशान् श्लोकांश्च भजेयुः परमां मुदम् ।
आत्मशुद्धिं मुमुक्षूणां निवेदयति सा स्थितिः ॥ २६६

पठनं मननं तेषामनुष्ठानं प्रबोधनम् ।
आचारे स्थापनं चैव लक्षणानि महात्मनाम् ॥ २६७

*　　　*　　　*

व्याधिग्रस्तेन रुच्योऽपि पदार्थो नेष्यते यथा ।
तथैवाशुद्धचित्तेन धर्मवाक्यं च नेष्यते ॥ २६८

अन्नं क्षुत्पीडितो भुङ्क्ते हर्षेण महता यथा ।
तथैव ज्ञानवाक्यानि जिज्ञासुः शृणुते जनः ॥ २६९

*　　　*　　　*

व्यायाममनुतिष्ठन्ति नित्यं पश्यत सैनिकाः ।
ब्रह्मनिष्ठा भवेयुश्च स्वानुष्ठानपरास्तथा ॥ २७०

व्यायामेन विना देहः स्तब्धतामुपगच्छति ।
अनुष्ठानं विना चित्तं मान्द्यमालस्यमेति च ॥ २७१

*　　　*　　　*

अभुक्तं यत्तु पाथेयं पथिकस्य क्षुधां यथा ।
न निवर्तयितुं शक्तं तथैव ज्ञानमात्मनः ॥
निष्प्रयोजनमेव स्यादनुभूतेरगोचरम् ॥ २७२

*　　　*　　　*

नेत्रहीनः परस्येह नेत्राभ्यां नैव पश्यति ।
बधिरोऽपि न चान्यस्य श्रोत्राभ्यां शृणुते नरः ॥ २७३

अनात्मज्ञोऽपि नान्यस्य ज्ञानेनात्मसुखं व्रजेत् ।
जन्मन्यस्मिन् परस्मिन् वा स्वयं तद्ज्ञानमाप्नुयात् ॥ २७४

* * *

निर्माता ननु सौधस्य जागरूकस्तथा भवेत् ।
भित्तिर्यथा न वक्रा स्यान्नोचेत्सौधः पतिष्यति ॥ २७५

मोक्षसाधनकालेऽपि साधकः स्यादृजुस्थितिः ।
अवश्यं हि भवेन्नोचेत्पतनं तस्य सौधवत् ॥ २७६

* * *

सरित्स्वल्पाऽपि लोकेऽस्मिन् तीव्रवेगा भवेद्यदि ।
निष्प्रत्यूहगतिर्भूत्वा गम्यं प्राप्नोति सागरम् ॥ २७७

तथैव तीव्रनिष्ठास्तु चित्तैकाग्रतयाऽन्विताः ।
निर्निरोधतया मोक्षं प्राप्नुवन्ति मुमुक्षवः ॥ २७८

* * *

शरीरान्तर्गतो रोगो बहिर्दृष्टो न यद्यपि ।
भवत्येवात्मसौख्यस्य भञ्जकस्तद्वदेव हि ॥ २७९

अव्यक्ता अपि दोषाश्चेदन्तरङ्गे स्थितिं गताः ।
दुःखप्रदा भवेयुस्ते जनानामिति चिन्तय ॥ २८०

स्वल्पोऽपि रोगो दुःखस्य निदानं स्याद्यथा तथा ।
अशान्तेर्हि निमित्तं स्यादल्पोऽपि प्राकृतो गुणः ॥ २८१

* * *

धर्मकार्ये त्वयोद्दिष्टे जनाश्चेत्सहकारिणः ।
न भवन्ति तदा तेषां निन्दा नैवोचिता तव ॥ २८२

ज्ञानशक्तिस्तपश्शक्तिर्दैवशक्तिश्च मे तथा ।
आत्मशक्तिर्न सन्तीति स्वात्मनिन्दापरो भव ॥ २८३

तवैव तत्र दोषः स्यात् प्रथमो याचनाकृतः ।
अधिकारविहीनस्य वचः कः पालयेदिह? ॥ २८४

सर्वेऽप्यनुसरन्त्येव वचनान्यधिकारिणाम् ।
अयं मुख्योपदेशः स्यादात्मशान्त्यै तवानघ! ॥ २८५

*   *   *

क्षारादिना यथा स्वर्णं मलिनं शोधयन्ति वै ।
तथा तीव्रमनुष्ठानं विधाय मननादिभिः ॥ २८६

धारणाध्यानमुख्यैश्च यत्नैः संशोध्य मानसम् ।
दृढयत्नपरो भूत्वा भजेन्निर्विषयां स्थितिम् ॥ २८७

*   *   *

प्रवेशं सूक्ष्मरूपेण कुर्वतामेव निग्रहः ।
दुर्गुणानां तु कर्तव्यो नोचेद्भ्रीसमस्थितिम् ।
प्राप्याभिवर्धमानास्ते जायन्ते सर्वनाशकाः ॥ २८८

*   *   *

स्वस्य दोषान् परेषां च गुणान्वदति चोत्तमः ।
स्वस्यान्यस्य गुणान् दोषान् समं वदति मध्यमः ॥ २८९

स्वगुणान् परदोषांश्च ख्यापयत्यधमो जनः ।
स्वस्मिन्नथ परस्मिंश्च गुणान् दोषान् यथाक्रमम् ॥
अविद्यमानान् प्रकटान् करोतीहाधमाधमः ॥ २९०

प्रस्तावं गुणदोषानां त्यक्त्वा सर्वात्मना सदा ।
स्वरूपस्थितिमालम्ब्य मनोवृत्तीर्विनाशयन् ॥ २९१

दैवभावे स्थितो यस्तु स भवेदुत्तमोत्तमः ।
अस्पृष्टो यो गुणैर्दोषैस्स जीवन्मुक्त उच्यते ॥ २९२

*   *   *

आकाशं स्वगुणं शब्दं पवनश्चलनं तथा ।
सूर्यः प्रकाशं सलिलं शैत्यं नैव त्यजन्ति हि ॥
आत्मज्ञानी तथाऽऽत्मीयं दैवभावं न मुञ्चति ॥ २९३

महामहिमसंपन्ना अपि लोके महौजसः ।
नातिक्रामन्ति मर्यादामाकाशे भानुमानिव ॥ २९४

अम्भोनिधिस्स्वमर्यादामतिक्रम्य प्रयाति किम् ।
महात्मानोऽनुवर्तन्ते तामेवानुत्तमां स्थितिम् ॥ २९५

अल्पाश्च सरितस्तीरमतिक्रम्य विपत्प्रदाः।
भवन्ति तद्वदुद्वृत्तास्सामान्या अपि साधवः ॥ २९६

* * *

यः कोऽपि संशयःस्याच्चेद्यत्र कुत्रापि तेऽनघ।
यतस्व सत्यं विज्ञातुमपनेतुं च संशयम् ॥ २९६

संशयो बाधते देहे प्रविष्टः कण्टको यथा ।
कण्टको नापनीतश्चेद्व्रणमुत्पादयेन्महत् ॥
संदेहोऽप्यनिवृत्तस्सन् दुर्वृत्तं कुरुते नरम् ॥ २९८

* * *

विध्युक्तेन विधानेन मातापितृचतुष्टयम् ।
सेवमानाः प्रपद्यन्ते जीवन्मुक्तिमिहैव हि ॥ २९९

स्वजन्महेतुभूतौ तु प्रथमौ पितरौ नुतौ ।
ततो गुरुकुले गायत्र्याचार्यावपरौ स्मृतौ ॥ ३००

तथोपनिषदोङ्कारौ वानप्रस्थाश्रमे मतौ ।
स्त्रियस्तुर्याश्रमे सर्वा मातरः परिकीर्तिताः ।
सोऽहंभावः पितेत्येवं विज्ञातव्यं मनीषिभिः ॥ ३०१

गृहस्थाश्रमयोगस्तु यदि स्यान्मुक्तिकांक्षिणः ।
दयां तु मातरं विद्याद्धर्मं च पितरं तथा ॥ ३०२

* * *

दक्षिणां दिशमुद्दिश्य संप्रयुक्तश्शरो यथा ।
उत्तराशास्थितं लक्ष्यं न भिनत्ति तथैव हि ॥ ३०३

दृश्यसौख्यं समालक्ष्य प्रधावच्चित्तमात्मनि ।
दृशि नैव लयं याति शाश्वतब्रह्मसौख्यदम् ॥ ३०४

* * *

मित्रीकर्तुं प्रयतते शत्रुमप्यथ सात्त्विकः ।
शत्रुं च शत्रुं मित्रं च मित्रं पश्यति राजसः ॥ ३०५

मित्रेऽपि शत्रुतां द्रष्टुं यतते तामसो जनः ।
स्वस्वभावं विजानीयादेवं गुणविलोकनात् ॥ ३०६

* * *

यथाऽग्निर्वर्धते नित्यं समिद्भिश्च घृतेन च ।
इन्धनानामभावे तु प्रयात्युपशमं यथा ॥ ३०७

विद्या ज्ञानं च वर्धेते नित्याभ्यासवशात्तथा ।
अनभ्यासे तु संयाति क्षयं पश्यत तद्द्वयम् ॥ ३०८

* * *

सदा मुखे प्रसन्नत्वं भाषितं च मितं तथा ।
उपायौ मनसश्शान्तेर्नैर्मल्यस्य च सुव्रत! ॥ ३०९

* * *

यस्मिन् जन्मनि जायन्ते संस्कारास्तु चतुर्विधाः ।
तस्मिन्नेव मुमुक्षूणां मोक्षसिद्धिः सुनिश्चिता ॥ ३१०

जीवनोपायसौलभ्यं विना येन सुदुर्लभम् ।
स तावत्पुण्यसंस्कारः प्रथमः परिकीर्तितः ॥ ३११

वैराग्यं सुस्थिरं न स्याद्यं विना मोक्षमिच्छताम् ।
गुरोरनुग्रहः सोऽयं द्वितीयः प्रोच्यतेऽनघ! ॥ ३१२

नाशः प्रकृतिदोषस्य विना येन न सिध्यति ।
ईश्वरानुग्रहः सोऽयं तृतीय इति गण्यते ॥ ३१३

प्रवेशो ब्रह्मविद्यायां विना येन न लभ्यते ।
चतुर्थस्स तु संस्कारो महर्षीणामनुग्रहः ॥ ३१४

एते सर्वेऽपि संस्काराः पूर्वपुण्यवशादिह ।
प्राप्यन्ते यस्य कस्यापि लोपोऽत्र प्रतिबन्धकः ॥ ३१५

मोक्षमार्गो भवेन्नूनं तस्मात्सर्वे मुमुक्षवः ।
सर्वसंस्कारसंसिद्ध्यै प्रयतेरन्नतन्द्रिताः ॥ ३१६

* * *

धैर्यं मनुष्यं लोकेऽस्मिन् प्रापयत्युन्नतां स्थितिम् ।
अधैर्यं पुनरस्यैव कारणं स्यादधोगतेः ॥ ३१७

* * *

श्रद्धयैवोन्नतं लोकं प्राप्नोति मनुजस्तथा ।
अश्रद्धया त्वधोलोकमवाप्नोति न संशयः ॥ ३१८

* * *

दर्पणे स्वमुखं द्रष्टुं दर्पणस्य न केवला ।
शुद्धिर्नयनयोश्चापि शुद्धिर्द्रष्टुरपेक्ष्यते ॥ ३१९
तथैव द्रष्टुमात्मानं नैर्मल्यं हृदयस्य यत् ।
नालं तत्तीव्रजिज्ञासा ब्रह्मणश्चाप्यपेक्ष्यते ॥ ३२०
नेत्रयोर्दर्पणस्यापि शुद्धत्वे सुव्यवस्थिते ।
स्त्रियो वा पुरुषा वाऽपि ब्राह्मणा ब्राह्मणेतराः ॥ ३२१
गृहस्था यतयश्चापि ये केचिदथवा जनाः ।
सुस्पष्टं स्वमुखं द्रष्टुं शक्नुवन्ति यथा तथा ॥ ३२२
जिज्ञासाचित्तनैर्मल्ययोगे सर्वेऽपि साधकाः ।
आत्मनो दर्शनं कर्तुं प्रभवन्ति विना भिदाम् ॥ ३२३

* * *

वृक्षमूले दृढं पाशैः पशुर्बद्धो यथा ततः ।
प्रयातुं नैव शक्नोति बहुधा ताडितोऽपि सन् ॥ ३२४

तथा दृश्यसमासक्तं चित्तं यत्ने कृतेऽपि च।
ईश्वराभिमुखं कर्तुं साधकेन न शक्यते ॥ ३२५

नीयते नियतस्थानं पशुर्बन्धविवर्जितः ।
दृश्यवृत्तिविमुक्तं चेत्संकल्परहितं ततः ॥
चित्तं भगवदायत्तं विधातुं शक्यते द्रुतम् ॥ ३२६

तद्विनिर्मुक्तचित्तानां मोक्षोऽपि सुगमो भवेत् ।
पाशबद्धः पशुप्रायः पाशमुक्तो विमुक्तिमान् ॥ ३२७

*　　*　　*

ज्वलनः प्रज्वलन् शुद्धामशुद्धां वस्तुसन्ततिम् ।
यथा भस्मीकरोत्येवं ज्ञानाग्निरपि चोज्ज्वलः ॥ ३२८

स्तुतिनिन्दे तथा लाभालाभौ चैव शुभाशुभे ।
एवं द्वन्द्वात्मकं सर्वं भस्मसात्कुरुतेऽनघ! ॥ ३२९

*　　*　　*

चरन्तो यत्र कुत्रापि पक्षिणोऽस्तंगते रवौ ।
स्वनीडान्युपगच्छन्ति पुनस्सूर्योदये सति ॥ ३३०

नानादिशः प्रयान्त्येवं गृहस्थैरपि धार्मिकैः ।
विहङ्गवृत्तिभिर्भाव्यं ध्यानसाधनतत्परैः ॥ ३३१

*　　*　　*

पदार्था नोपलक्ष्यन्ते जले कलुषिते स्थिताः ।
अपनीते तु कालुष्ये स्वल्पं वस्त्वपि दृश्यते ॥ ३३२

न वेद्यते सत्यतत्त्वं चित्ते विषयदूषिते ।
तस्मिन् प्रशान्ते सत्यस्य स्वरूपं भाति विस्फुटम् ॥ ३३३

अशान्तिकाले लेखानां लेखनं भाषणं तथा ।
न कर्तव्यं तदेतत्तु कर्तव्यं प्रशमस्तिथौ ॥ ३३४

*　　　　*　　　　*

भेरीघण्टादिनिर्घोषे सूक्ष्मो वीणाध्वनिर्यथा ।
न श्रूयते तथा चित्ते सङ्कल्पैर्विविधैर्भृशम् ॥ ३३५

समाक्रान्ते दैवभावस्सोऽहंभावोऽथवाऽनघ! ।
नैवानुभूयते तस्माद्ब्रह्मनिष्ठैर्महात्मभिः ॥
सदा प्रशान्तहृदयैर्भाव्यमेकान्तवासिभिः ॥ ३३६

*　　　　*　　　　*

गन्तव्यमग्रतः पुसां सततं मार्गदर्शिना ।
प्रथमं गुरुभिर्भाव्यं सदनुष्ठानशालिभिः ॥ ३३७

अभाव एव लोकेऽस्मिंस्तादृशानां महात्मनाम् ।
ज्ञाने धर्मे च लोपस्य हेतुरित्यवधार्यताम् ॥ ३३८

*　　　　*　　　　*

सर्वदा हृदयद्वारं यस्यात्र विवृतं भवेत् ।
तस्य पुण्यात्मनस्तावल्लोकोऽयं न तु केवलः ॥ ३३९

स्वर्गादयोऽपवर्गान्तास्सर्वे लोकाश्शुभप्रदाः ।
भवन्ति विवृतद्वारास्सर्वकालेषु सोदर! ॥ ३४०

*　　　　*　　　　*

सन्न्यासिनो गृहस्थाश्च भवन्त्वन्योन्यबन्धवः ।
गृहस्थैर्मुक्तसंगानां कर्तव्यं देहपोषणम् ॥ ३४१

सन्न्यासिभिर्गृहस्थानां विधेयं चात्मपोषणम् ।
गृहस्थाः कृतयत्नाः स्युर्वेदशास्त्राभिवृद्धये ॥
वेदान्तविद्यावृद्ध्यर्थं प्रयतेरन्यतीश्वराः ॥ ३४२

संपादनं स्वराज्यस्य कर्तव्यं गृहसंस्थितैः ।
संपादनीयं स्वाराज्यं परिव्राजकपुङ्गवैः ॥ ३४३

गृहस्थैः करणीयं हि धनधान्यसमार्जनम् ।
स्थितिर्ध्याने समाधौ च संपाद्या भिक्षुभिर्दृढा ॥ ३४४

एवमन्योन्यमैत्र्या स्युरुभये धन्यजीविनः ।
ततश्चेहपरौ लोकौ पावनौ द्वौ भविष्यतः ॥ ३४५

* * *

सप्ताचलानतीत्यैव वेङ्कटेशस्य दर्शनम् ।
लभन्ते न ततः पूर्वं भक्तलोकास्तथैव हि ॥ ३४६

अतिक्रम्य शुभेच्छादिभूमिकाः सप्त साधकाः ।
ब्रह्मानन्दसुखं यान्ति न ततः प्राक्कथञ्चन ॥ ३४७

* * *

श्वश्रूर्गृहेऽद्य या सैव वधूरासीत्पुराऽनघ!
या वधूरद्य सा भाविकाले श्वश्रूर्भविष्यति ॥ ३४८

अधुना यो गुरुर्भाति शिष्य आसीत्स वै पुरा ।
शिष्योऽप्याधुनिकः काले गुरुत्वमुपयास्यति ॥ ३४९

सम्यगेतत्परामृश्य सत्यं हृदि पुनःपुनः ।
परामात्मोन्नतिं प्राप्तुं प्रयतेरन्मुमुक्षवः ॥ ३५०

* * *

यदोन्नतकुले जातो नीचवंशैर्युतस्तदा ।
स नयेत्प्रोन्नतिं तांस्तु न स्वयं नीचतां व्रजेत् ॥ ३५१

* * *

सन्यासी यदि संपर्कं याति संसारिभिस्सह ।
स साधुशीलांस्तान् कुर्यात् संसारी न भवेत्स्वयम् ॥ ३५२

* * *

ज्ञानप्राप्तेर्भवेत्पुण्यकर्मापि प्रतिबन्धकम् ।
इति केचिद्वदन्तीह तत्त्वं ज्ञेयमिदं बुधैः ॥ ३५३

सकामकर्म ज्ञानस्य स्यान्नाम प्रतिबन्धकम् ।
निष्कामं न तथा तत्तु कर्मराशिं दहेत्स्वयम् ॥ ३५४

ज्ञानोदयो भवेदादौ पुण्यकर्मप्रभावतः ।
जलमग्निं यथा पापकर्म ज्ञानं विनाशयेत् ॥ ३५५

* * *

कुटुम्बस्य परित्यागस्त्यक्त्वाऽऽहारं तरोरधः।
तूष्णीं स्थितिर्विविक्ते वा वैराग्यमिति नोच्यते ॥ ३५६

वैराग्यस्य भवेदङ्गं तदेतदिति चिन्तय ।
काले निमेषमात्रे वा व्यर्थं गच्छति यस्य तु ॥ ३५७

नेत्राभ्यामश्रुधाराः स्युर्दुःखं तीव्रं च संभवेत् ।
भगवद्विषये; तस्य स्थितिर्वैराग्यमुच्यते ॥ ३५८

आसक्तिरन्नपानादिष्वपि तस्य न जायते ।
भक्तस्य तादृशस्यैव भगवद्दर्शनं भवेत् ॥ ३५९

* * *

गम्यं यद्यपि देवस्य साक्षात्कार इति स्मृतम्।
तथाऽपि लब्धुं विद्यायां नैपुण्यं यत्नमाचरेत् ॥ ३६०

अथानुष्ठाननिष्ठायां श्रेष्ठत्वं समुपार्जयेत् ।
परेषामुन्नतस्थित्यै प्रयत्नमपि निर्वहेत् ॥ ३६१

किञ्च स्वातन्त्र्यसिद्ध्यर्थं देशस्य कृषिमाचरेत् ।
सत्ये धर्मे रतो भूत्वा तत्प्रबोधपरो भवेत् ॥ ३६२

इमानि पञ्च कर्माणि सम्बद्धानि परस्परम् ।
सम्यङ्निर्वोढुमारोग्यं संरक्षेत्साधको जनः ।
विना येनोक्तकार्याणि कर्तुं नैव प्रभुर्भवेत् ॥ ३६३

* * *

अमनस्कस्थितिर्भाति साधकानां चतुर्विधा ।
स्वाधीनचित्तता तावत्प्रथमा स्थितिरुच्यते ॥ ३६४

मनसश्चेन्द्रियाणां च साक्षित्त्वं मयि विद्यते ।
इति बोधो द्वितीया स्यात् ध्यानेन परमात्मनि ॥ ३६५

चित्तस्यैक्यं तृतीया स्यात् मनो नास्त्येव वस्तुतः ।
सङ्कल्पमात्रं तद्रज्जाववविचारेण सर्पधीः ॥ ३६६

जायते, तत्र सर्पस्तु नास्ति कालत्रयेऽपि च ।
जगद्ब्रह्मणि नास्त्येव कल्प्यते तदविद्यया ॥
इति विज्ञायते यत्र तुरीया सा स्थितिर्मता ॥ ३६७

*　　　*　　　*

सत्यमेव प्रकाशस्स्याच्चित्तनैर्मल्यकारकः ।
प्रकाशस्था जना लोके मनोवैकल्यवर्जिताः ॥ ३६८

सर्वान् पदार्थान् पश्यन्ति चरन्ति च भयं विना ।
असत्यमेवान्धकारो मनःक्लेशविधायकः ॥ ३६९

अन्धकारे स्थितैर्भीतैर्न किञ्चिद्दृश्यते जनैः ।
सत्यासत्यगती ह्येते प्रकाशतमसोरिव ॥ ३७०

आत्मसौख्यं मनश्शान्तिं दुःखाभावस्थितिं सदा ।
यस्तावद्वृणुते सोऽयं सत्यनिष्ठो भवेज्जनः ॥ ३७१

*　　　*　　　*

निदाघे तीव्रतां याते हिमं संक्षीयते यथा ।
तथा प्रवृद्धे वैराग्ये क्षीयन्ते दृश्यवासनाः ॥ ३७२

वासनानां तु विलयो हृदि यावन्न सिध्यति ।
सुदृढा ब्रह्मनिष्ठा तु तावन्नैव भवेदिह ॥ ३७३

*　　　*　　　*

सत्कर्माणि सदा कुर्वन् पाणिपादादिकेन्द्रियैः ।
वाचा दैवं स्तुवन् सत्यधर्मतत्त्वं च बोधयन् ।। ३७४

मालिन्यवर्जितेनैवं हृदा संयमशोभिना ।
परोपकारसंसक्तस्वभावेन च संयुतः ।। ३७५

आजीवितं नयेत्कालं नियतात्मा तु यः पुमान् ।
स एव जीवन्मुक्तश्च महात्मा ब्रह्मतत्त्ववित् ।
योगी परमभक्तश्च भवेदत्र न संशयः ।। ३७६

* * *

पाशैरनेकैर्बद्धानां काष्ठानां बन्धनं दृढम् ।
तावदेव भवेद्यावन्नाग्निर्विशति तत्र वै ।। ३७७

तथैव हृदये यावद् ज्ञानाग्निर्न ज्वलत्यथ ।
तावदेव दृढं भाति जनानां कर्मबन्धनम् ।। ३७८

ज्ञानाग्निस्सर्वकर्माणि भस्मसात्कुरुते यदा ।
तदैव हृदयग्रन्थिविच्छेदो जायते नृणाम् ।। ३७९

* * *

मनोवाक्कायकर्मणि त्रीण्यप्येकविधानि चेत् ।
न भवन्ति तदा व्यर्थान्यनुष्ठानानि चात्मनः ।। ३८०

एकत्र पात्रमन्यत्र तैलं वर्त्यपरत्र चेत् ।
निक्षिप्यन्ते तदा दीपो ज्वलेत्किं पश्य सुव्रत! ।। ३८१

* * *

श्रुत्वा पक्षिमृगादीनां ध्वनिं तत्क्षणमेव हि ।
तेषां जातिस्वरूपं तु यथा निश्चीयते जनैः ।। ३८२

तथैव च मनुष्याणामाकर्ण्य वचनान्यपि ।
निश्चेतुं शक्यते तेषां स्वरूपं तत्त्वतोऽनघ! ।। ३८३

सत्यशान्तिदयापूर्णं साधोस्तु वचनं भवेत् ।
असत्यं कठिनं वाक्यमशान्तं वक्ति दुर्जनः ॥ ३८४

*          *          *

यद्यपि श्रेष्ठमाणिक्यं पतितं मलिने स्थले ।
नैव यात्यपकर्षं तु कदाचिदपि मूल्यतः ॥ ३८५

यद्यप्यायोजितं ताम्रं रत्नसिंहासनोपरि ।
प्रकर्षं मूल्यतो नैव प्रयातीति निबोधत ॥ ३८६

न सतां नीचदेशेऽपि स्थितानां गौरवक्षतिः ।
समुन्नते स्थलेऽप्यल्पो नैव संयाति गौरवम् ॥ ३८७

*          *          *

अलसत्वं शिलातुल्यं जडं चापि तमोमयम् ।
सोऽहंपरत्वं सत्त्वाढ्यं चैतन्योपेतमग्निवत् ॥ ३८८

अधःपतनशीला हि शिला सर्वत्र दृश्यते ।
अग्निस्तु प्रज्वलत्यूर्ध्वं तेजोयुक्तस्सदा ततः ॥
तमोगुणं परित्यज्य सत्त्वमेवावलम्ब्यताम् ॥ ३८९

*          *          *

न नमन्ति महात्मानं ये भक्त्या विनयेन च ।
तेषां वशे भवेन्नैव प्रकृतिर्जडचेतसाम् ॥ ३९०

*          *          *

अग्नेः सन्धुक्षणे धूमः प्रथमं दृश्यते ततः ।
ज्वाला देदीप्यमाना स्यात्तथाऽऽत्मध्यानवर्तिनाम् ॥ ३९१

आदौ दुःखान्युदेष्यन्ति तथाऽपि तदनन्तरम् ।
आत्मज्योतिः प्रदीप्तं स्यादनन्तानन्दकारणम् ॥ ३९२

*          *          *

स्यात्कूष्माण्डलतातुल्यं जीवितं तु महात्मनाम् ।
गत्वा सुदूरं फलति सा लता न जनिस्थले ॥ ३९३

तथैव च महात्मानः स्वार्थगन्धविवर्जिताः ।
स्वकुटुम्बात्परत्रैव भवन्ति फलदायकाः ॥ ३९४

* * *

आकाशे जलदः स्वीयं जलं सर्वं न वर्षति ।
तत्र किञ्चिज्जलं सूर्यतापेनैव निपीयते ॥ ३९५

तथा मुमुक्षुः सर्वेषां न भुङ्क्ते कर्मणां फलम् ।
नश्यन्त्यनेककर्माणि भगवद्ध्यानयोगतः ॥ ३९६

* * *

विना विनिर्मलं दैवगुणं कुर्वन्ति ये जनाः ।
कोटिशो दिव्यमन्त्राणां जपं लेखनमेव वा ॥ ३९७

तेभ्योऽप्येकस्य मन्त्रस्य जपं वा लेखनं तथा ।
यः करोति गुणाढ्यः सन् स श्रेष्ठ इति कथ्यते ॥ ३९८

आवापादपि बीजानां बहूनामूषरस्थले ।
अल्पबीजसमावापः सुक्षेत्रेऽधिकलाभदः ॥ ३९९

* * *

आलोक्यतेऽन्तरात्माऽऽत्मनिष्ठया विमले हृदि ।
निर्मले निश्चले सूर्यप्रतिबिम्बमिवोदके ॥ ४००

जले कलुषिते सूर्यप्रतिबिम्बं न दृश्यते ।
अशुद्धे हृदये तद्वदन्तरात्माऽपि सोदर! ॥ ४०१

* * *

पुरातनेन वस्त्रेण सदृशं चित्तमुच्यते ।
किञ्चिदप्यंशुकं जीर्णं सन्दध्यात्सद्य एव हि ॥ ४०२

नोचेत्सर्वं भवेज्जीर्णं चित्तस्थितिरपीदृशी ।
मनागपि बहिर्वृत्त्या हृदयं दूषितं यदि ॥ ४०३

सपद्येव हि तस्यापि विधेयं परिवर्तनम् ।
नोचेत्सर्वात्मना दृश्ये संलग्नं तद्भवेद्ध्रुवम् ॥ ४०४

* * *

बन्धनं कस्यचिज्जन्तोस्सूत्रैस्सूक्ष्मैरसंभवम् ।
तैरेव गुणतां प्राप्तैर्गजराजोऽपि बध्यते ॥ ४०५

एवमेकाग्रताहीनैरिन्द्रियैश्चेतसोऽपि च ।
असाध्यो निग्रहः किं तु संयतैस्तन्निगृह्यते ॥ ४०६

* * *

अरण्ये सिंहशार्दूलभल्लूकादिमृगान्विते ।
अस्त्रशस्त्रादिसंपन्नो निर्भयं सञ्चरेत्पुमान् ॥ ४०७

तथैव शास्त्रनिर्दिष्टसदनुष्ठाननिष्ठितः ।
संसारिजनसङ्कीर्णे कामक्रोधमये स्थले ॥ ४०८

सञ्चरन् धर्मबोधार्थं भवत्येवाकुतोभयः ।
बाणतूणीररहितो गहने मृगसङ्कुले ॥ ४०९

यथा विपन्नो भवति तथाऽनुष्ठानवर्जितः ।
जनमध्ये स्थितो याति विपत्तिं विषयाहतः ॥ ४१०

* * *

मनसस्साक्षिणी काचिद्दैवशक्तिः प्रपश्यति ।
मानसान् सर्वसङ्कल्पान् सा हि दैवस्वरूपिणी ॥ ४११

तदीयां दृष्टिमाच्छाद्य कर्तुं किञ्चिन्न शक्यते ।
स्वकृतं वेत्ति हि स्वात्मा नान्यो यद्यपि वेत्ति तत् ॥ ४१२

कर्मणां तु फलानीह ददाति परमेश्वरः ।
न कोऽपि तद्दिव्यदृष्टेर्मार्गाद्याति बहिर्जनः ॥ ४१३

एतत्सत्यं तु विज्ञाय जीवितुं यत्नमाचरेत् ।
तादृशस्सर्वदा सत्यमार्गगामीत्युदीर्यते ॥

नोचेन्निमीलिताक्षेण बिडालेन समो भवेत् ॥ ४१४

* * *

अज्ञानहेतुभूतस्य मोक्षमार्गनिरोधिनः ।
अलसत्वस्य राज्ञेव शत्रुं निर्जेतुमिच्छुना ।
नैवावकाशो दातव्यः प्रकृतिं जेतुमिच्छता ॥ ४१५

* * *

आदौ सौख्यावहं यद्यप्यलसस्येह जीवितम् ।
अन्ते दुर्भरमेव स्यात्पराश्रयपराहतम् ॥ ४१६

स्वातन्त्र्यं गौरवं किंचित्स्यातामत्र पशोरपि ।
अलसस्य तु ते नैव भवेतामिति भावय ॥ ४१७

आजन्मरोगी श्रेष्ठः स्यादलसादपि मानवात् ।
यतस्स नैव लोकस्य निन्दायाः पात्रतां व्रजेत् ॥ ४१८

* * *

निक्षिप्तस्यापि निकटे मधुरस्यापि वस्तुनः ।
रसं जिह्वा न गृह्णाति यावत्तेन न सङ्गता ॥ ४१९

तथैव ध्यानकालेऽपि मनो यावन्न लीयते ।
आत्मन्यात्मसुखं योगी तावन्नाप्नोति सोदर! ॥ ४२०

* * *

प्रकृष्टमेधासंपन्नोऽप्यधः पतति मानवः ।
देहस्मृतिविहीनश्चेत्साधकोऽपि तथैव हि ॥ ४२१

ज्ञानयोगबलाढ्योऽपि दैवभावनया विना ।
अज्ञानगर्ते निपतेदतो दैवं सदा स्मरेत् ॥ ४२२

* * *

दृश्यसङ्कल्पहीनस्य द्रष्टरि क्रीडतस्सदा ।
प्रसन्नात्मसुखस्थस्य योगिवर्यस्य सन्निधौ ॥

स्वर्गोऽपि लज्जितः खिन्नभावं यातीति भावय ॥ ४२३

*　　　*　　　*

सर्वं जगदिदं ब्रह्ममयं मत्वा सदा हृदि ।
ब्रह्माकारैकवृत्तिर्यो ब्रह्मज्ञानी भवेन्नरः ॥ ४२४

तस्यान्तिके तु ब्रह्मादिलोकत्रितयमात्मनः ।
संलक्ष्य हीनतां स्याद्वै लज्जितं व्याकुलं तथा ॥ ४२५

*　　　*　　　*

प्रवृत्तिरुत्तमा जातेः परिणामस्य कारणम् ।
अन्त्यजातिगतो जीवः शूद्रत्वं लभते तया ॥ ४२६

शूद्रो वैश्यत्वमाप्नोति वैश्यः क्षत्रियतां तथा ।
क्षत्रियो ब्राह्मणत्वं च ब्राह्मणो ब्रह्मतां व्रजेत् ॥ ४२७

आश्रित्य कुलमत्रोक्तः परिणामो न जायते ।
सर्वदा सर्वधा सोऽयं गुणसंस्कारमूलकः ॥ ४२८

अधस्तान्निर्वहन्वृत्तिमुद्योगी सत्प्रवर्तनात् ।
उन्नतां स्थितिमाप्नोति यथा तद्वदिदं मतम् ॥ ४२९

*　　　*　　　*

अपरिग्रहनिष्ठास्तु केचित्सन्ति दृढव्रता : ।
न किञ्चित्परिगृह्णन्ति परेभ्यस्ते महाशयाः ॥ ४३०

परं तु ते परेभ्योऽपि न किञ्चिद्ददति स्वयम् ।
परोपकारदानादिधर्मवैमुख्यमाश्रिताः ॥ ४३१

अपरिग्रहतः पापं न संभवति नूतनम् ।
तथाऽपि पूर्वपापस्य निवृत्तिः संभवेत्कथम्? ॥
करणीयमनुष्ठानं तदर्थं पुण्यकर्मणः ।। ४३२

ऋणस्य नूतनस्याद्य त्यागस्तु श्रेयसे भवेत् ।
परं तु प्राक्तनस्यास्य मोचनं जायते कथम् ?॥ ४३३

*　　　*　　　*

परित्यज्य गृहं कुत्राप्याश्रमे मठ एव वा ।
एकान्ते केवलं स्थित्या जन्मसाध्यं न सिध्यति ॥ ४३४

अविद्यां दूरतस्त्यक्त्वा ज्ञेयब्रह्माथवेश्वरः ।
प्राप्तव्य इति तत्त्वं तु न कदाऽपि च विस्मरेत् ॥ ४३५

नोचेद्गृहं परित्यज्य पर्यटन्नलसो यथा ।
प्राप्स्यसि भ्रष्टतां सोऽहंपरत्वं नैव यास्यसि ॥ ४३६

*　　　*　　　*

यथा तु निर्भिद्याण्डानि बहिरायान्ति पक्षिणः ।
भित्वा बीजत्वचं यद्वद्बहिरायान्ति पादपाः ॥ ४३७

शिशवो बहिरायान्ति भित्वा गर्भाशयं यथा ।
निर्भिद्य हृदयग्रन्थिं जीवोपाधेश्शिवोऽपि च ॥ ४३८

आयात्यणुत्वं संत्यज्य विभुत्वं चोपगच्छति ।
जीवात्मतां विमुच्याथ परमात्मा भवत्यहो ॥ ४३९

अण्डाद्यावरणानां तु यदि भङ्गो न जायते ।
तदाऽण्डपिण्डबीजानां नैव स्यात्परिवर्तनम् ॥ ४४०

*　　　*　　　*

चतुर्विधं ब्रह्मचर्यं कीर्तितं नैष्ठिकं तथा ।
गार्हस्थं वैधुरं चैवमखण्डमिति चानघ! ॥ ४४१

नैष्ठिकब्रह्मचर्यं तु शुकेन परिपालितम् ।
गृहस्थब्रह्मचर्यं च चचार जनको नृपः ॥ ४४२

वैधुरं ब्रह्मचर्यं तु याज्ञवल्क्येन शीलितम् ।
श्रीकृष्ण एक एवासीदखण्डब्रह्मचर्यभाक् ॥ ४४३

पुरुषाणामिव स्त्रीणामपि सम्मतमेव तत् ।
गार्गी बभूव नारीषु नैष्ठिकब्रह्मचारिणी ॥ ४४४

चूडाला योगिनी प्रोक्ता गृहस्थब्रह्मचारिणी ।
वैधुरब्रह्मचर्येण मैत्रेयी प्रथिता पुरा ॥ ४४५

साध्वी तु पौतमस्यासीदखण्डब्रह्मचारिणी ।
बृहदारण्यके योगवासिष्ठात्मपुराणयोः ॥ ४४६

चरित्राण्यद्भुतान्यासां श्रूयन्ते पावनानि वै ।
भेदो न दृष्ट एतेषां मोक्षप्राप्तौ तथाऽपि च ॥ ४४७

नैष्ठिकब्रह्मचर्यस्था आत्मशक्तौ तु निस्तुलाः ।
ब्रह्मचर्यगतं तावद्रहस्यं भावयेदिदम् ॥ ४४८

*   *   *

जलाद्बहिर्गतो मत्स्यो यथा सौख्यं न विन्दति ।
दैवभावाच्च्युतो जीवस्तथा सौख्यं न विन्दति ॥ ४४९

पुनर्जलं प्रविष्टस्तु मत्स्यस्सुखमुपैति हि ।
दैवभावं प्रविष्टस्सन् जीवो याति सुखं तथा ॥ ४५०

*   *   *

श्रोतुं यथा न शक्नोति सङ्गीतं बधिरो जनः ।
द्रष्टुमन्धो न शक्नोति यथा चित्रं च सुन्दरम् ॥ ४५१

घ्रातुं गन्धं न शक्नोति नष्टघ्राणेन्द्रियो यथा ।
रुचिं वेत्तुं न शक्नोति जिह्वादोषहतो यथा ॥ ४५२

तथैव विद्याहीनोऽपि तत्त्वं वेदान्तगोचरम् ।
सारं शास्त्रस्य च ज्ञातुं नैव शक्नोति मूढधीः ॥ ४५३

*   *   *

दुर्लभाऽभ्यासकाले हि दैवभावे स्थितिस्सदा ।
ततो भक्त्या जपे ध्यानविधौ पारायणेऽपि वा ॥ ४५४

न विस्मरन्तु तं भावं तदभ्यासवशादिह ।
दैवभावे सदा तेषां स्थितिर्लभ्या भवेत्क्रमात् ॥ ४५५

*   *   *

आदौ जलस्थितिं सम्यक्परिशील्यैव कर्षकाः ।
कृषिकर्मसमुद्युक्ता भवन्ति हि न चान्यथा ॥ ४५६

तथैव प्रथमं भक्ता दृष्ट्वा दैवबलं ततः ।
महत्तरेषु कार्येषु भवन्तु निरतास्सदा ॥ ४५७

अभावे सलिलस्यात्र व्यर्था स्याद्विहिता कृषिः ।
विना दैवबलं तद्वत् कार्यं निष्फलतां व्रजेत् ॥ ४५८

*   *   *

सत्कर्मणामनुष्ठाने ब्रह्मनिष्ठादिसाधने ।
प्रयत्नाधिक्यमालम्ब्य ज्ञानाधिक्यमवाप्यते ॥ ४५९

वृक्षाणां पोषणेऽस्माकं श्रद्धयाऽधिकया किल ।
समृद्धा फलसंप्राप्तिर्जायते कृषिकर्मणि ॥ ४६०

वृक्षाणां पोषणे लोपः फललोपस्य कारणम् ।
ज्ञानलोपोऽपि सत्कर्मब्रह्मनिष्ठादिलोपजः ॥ ४६१

*   *   *

दृष्टिरीश्वरदृष्टिश्च जीवदृष्टिरिति द्विधा ।
समष्टिः प्रथमा तत्र द्वितीया व्यष्टिरुच्यते ॥ ४६२

समष्टिब्रह्मचैतन्यमीश्वरः परिकीर्त्यते ।
जीवो भवेत्तथा व्यष्टिब्रह्मचैतन्यमेव हि ॥ ४६३

भेदस्तयोस्तु विज्ञेयस्तत्तत्प्रकृतिमूलकः ।
किमयं जीवदृष्टिः स्यादथवेश्वरदृष्टिमान् ॥ ४६४

इति तत्त्वं तु विज्ञातुं शक्यते तत्प्रभेदतः ।
गृहेषु स्थापितो दीपो गृहस्यैव प्रकाशकः ॥ ४६५

सर्वस्यापि हि लोकस्य ननु सूर्यः प्रकाशकः ।
विना भेदेन सर्वेषामुपकारं करोति यः ॥ ४६६

एकेनैव प्रकारेण स भवेदुत्तमोत्तमः ।
उत्तमस्तु स्वदेशीयान् केवलान् सेवते जनः ॥ ४६७

स्वजातिमात्रोपकारी मध्यमः परिकीर्तितः ।
अधमः स्वकुटुम्बस्य सेवायामेव निष्ठितः ॥ ४६८

एतानतीत्य यस्तावत्समस्तप्राणिनां कृते ।
उपकारं विधत्ते स नरो नारायणो मतः ॥ ४६९

*           *           *

द्विविधौ तस्करौ लोके तयोर्भेदमिमं शृणु।
अपश्यतो हरत्याद्यो द्वितीयः पश्यतोहरः ॥ ४७०

आद्यस्साधारणश्चोरस्तद्विरुद्धोऽपरो मतः ।
अभूतकल्पनापूर्णैः स्तोत्रैः सङ्कीर्त्य मानवान् ॥ ४७१

हर्तुं प्रयतते सोऽयं प्रत्यक्षं वञ्चनापटुः ।
तस्मात्तद्विषयेऽत्यन्तं जागरूकैरनारतम् ॥
सत्यधर्मरतैस्सद्भिर्भाव्यं संयमशालिभिः ॥ ४७२

*           *           *

सन्निष्ठानिरता नो चेन्महान्तो गुरवस्त्वया ।
लभ्यन्ते तर्हि देवस्य ध्यानं भक्त्या समाचर ॥ ४७३

किन्तु निष्ठाविहीना ये सदाचारविवर्जिताः ।
गुरवो नियमापेता न कदाऽपि भजस्व तान् ।
अर्कवृक्षं समाश्रित्य लभेताम्रफलं तु कः? ॥ ४७४

कृपालुर्भगवान् योग्यं गुरुं त्वां प्रापयिष्यति ।
स्मरणीयमिदं तत्त्वं नैव कार्योऽत्र संशयः ॥ ४७५

*           *           *

कोपस्य शमनोपायाः कथ्यन्तेऽथ चतुर्विधाः ।
कोपस्योपरि कोपस्य प्रयोगः प्रथमो मतः ॥ ४७६

निमेषान् दश मौनेन दिव्यमन्त्रजपोऽथवा ।
यत्र कोपः समुद्भूतः परित्यज्याशु तत्स्थलम् ॥ ४७७

दूरतो गमनं; चात्र प्रथमस्तूत्तमो मतः ।
द्वितीयो मध्यमः प्रोक्तः कनिष्ठस्तदनन्तरः ॥ ४७८

अन्यः कश्चिदुपायोऽपि दृश्यते तद्विलक्षणः ।
स्वे महिम्नि स्थितिः स्वस्य यत्र कोपो न जायते ॥ ४७९

तुरीयोऽयमुपायस्तु शास्त्रैर्न प्रतिपादितः ।
सर्वेषामेव पापानां कोपः कारणमुच्यते ।
भवन्ति कोपाविष्टस्य जनाः सर्वेऽपि शत्रवः ॥ ४८०

* * *

बद्धाः पाशेन पशवः पक्षिणो मनुजा अपि ।
अनुसृत्यैव तं पाशं गच्छन्ति स्वेच्छया विना ॥ ४८१

पाशो यद्यग्निना दग्धस्तदा तेन न शक्यते ।
बद्धुं नेतुं च पश्वादीन् तद्वदेव हि सोदर! ॥ ४८२

वासनारूपपाशेन बद्धाः प्राक्तनकर्मणा ।
दृश्यं विषयमुद्दिश्य नीयन्ते जन्तुकोटयः ॥ ४८३

प्राक्तनः कर्मसंस्कारो दग्धश्चेद् ज्ञानवह्निना ।
तदा न शक्यते बद्धुं नेतुं वा तेन तानिह ॥ ४८४

तदेतत्सम्यगालोच्य ब्रह्मज्ञानाग्निना द्रुतम् ।
स्वीयं विषयसंस्कारं भस्मीकुरुत साधकाः! ॥ ४८५

* * *

गाढान्धकारे हस्तेन दीपमादाय यो जनः ।
प्रयाति तस्य मार्गो हि भवेद्दृग्गोचरोऽनघ! ॥ ४८६

अस्मिन् मायामये लोके तथैव भगवत्कृपाम् ।
अवलम्ब्य व्रजन् मुक्तेर्मार्गं स्पष्टं प्रपश्यति।
अपायेन विना मोक्षपदं चाप्नोति साधकः ॥ ४८७

पण्डितो वा द्विजो वाऽपि भवेन्नामाथवा यतिः ।
किमपायं विना गम्यं गच्छेद्दीपेन वर्जितः!!॥ ४८८

विद्याहीनोऽथवा निम्नकुलजो वनिताऽपि वा ।
दीपे सति विनाऽपायं गम्यं यात्येव पश्यत ॥ ४८९

*          *          *

नामसङ्कीर्तनपरैर्भगवद्भजने रतैः ।
ध्याननिष्ठैरवश्यं च संवेद्यं तत्त्वमुच्यते ॥ ४९०

कारणात्सागरजलादुद्भूतं लवणं यथा ।
सागरे पतितं भूयो जलमेव भवेत्तथा ॥ ४९१

हिमखण्डं जलाज्जातं जले मग्नं पुनर्जलम् ।
यथा भवेत्तथा चैव सञ्जातः परमात्मनः ॥ ४९२

जीवोऽपि कीर्तनाद्ध्यानाद्भजनात्परमेशितुः ।
तन्मयत्वं भजेत्सद्यस्तदेतत्तस्य लक्षणम् ॥ ४९३

*          *          *

युगेषु मोक्षप्राप्त्यर्थं कृतादिषु चतुर्ष्वपि ।
सत्यादयो बहुविधा धर्माश्शास्त्रेषु कीर्तिताः ॥ ४९४

प्रोक्ताः कृतयुगे धर्मास्सत्यज्ञानदयादयः ।
त्रेतायां तु तपोध्यानयोगमुख्याः प्रकीर्तिताः ॥ ४९५

यज्ञदानजपार्चादिविधानं द्वापरे तथा ।
भक्तिर्दानादिकर्माणि पुण्यानि च कलौ युगे ॥ ४९६

भक्तिं केचित्कलियुगे दानमन्ये तथापरे
पुण्यकर्माणि च प्राहुस्तारकाणि [illegible] ॥ ४९७

SRI JAGADGURU VISHWARADHYA
JNANA SIMHASAN JNANAMANDIR
LIBRARY
Jangamawadi Math, Varanasi
5794

तत्र तत्त्वमिदं ज्ञेयं कलौ भक्त्याद्यनुष्ठितम् ।
तारयित्वा कलियुगं द्वापरं प्रापयत्यथ ॥ ४९८

द्वापरं तारयित्वा च यज्ञादि विधिवत्कृतम् ।
त्रेतायुगं प्रापयति; तपोध्यानादयस्ततः ॥ ४९९

तद्युगं तारयित्वाऽथ प्रापयन्ति कृतं युगम् ।
सत्यज्ञानदयादीनामनुष्ठानं कृते युगे ॥ ५००

मोक्षं प्रापयतीत्येवं सोपानक्रम ईरितः ।
साध्यसाधनभावोऽपि स्पष्टमत्र विलोक्यते ॥ ५०१

युगे युगे च ये धर्माश्शास्त्रेषु प्रतिपादिताः ।
तत्तद्धर्मानुसारी तु तत्तद्युगगतो भवेत् ॥
ततो मुक्तिं च लभते तत्तद्धर्मानुशीलनात् ॥ ५०२

* * *

अविस्मृतिस्सदा चित्ते निर्मले परमात्मनः ।
परप्राणिहितं सत्यं दैवप्रीतिकरं वचः ॥ ५०३

परापेक्षाविरहिता क्रिया लोकहितावहा ।
भवन्ति यस्य तेनाप्ता करणत्रयशुद्धता ॥ ५०४

किमियं स्थितिरस्माभिस्संप्राप्तेति विचारणा ।
आत्मन्यनारतं कार्या साधुशीलैर्जनैरिह ॥ ५०५

* * *

विना तु करुणां भक्तिं तथा दैवविचारणाम् ।
कर्मकाण्डक्रिया लोकव्यवहाराश्च निष्फलाः ।
इक्षुदण्डेन सादृश्यं निष्पिष्टेन भजन्ति ते ॥ ५०६

कारुण्यादिगुणैर्युक्ताश्शान्तिपूर्णाः क्रियास्तथा ।
संसारव्यवहाराश्च ससारास्सरसेक्षुवत् ॥ ५०७

शमादिसहितं साक्षात्कारज्ञानं तु केवलम् ।
इक्षुसारेण विहितं सिताखण्डमिवादृतम् ॥ ५०८

तादृशज्ञानसंपन्ना जीवन्मुक्ता भवन्ति हि ।
तेषां प्रबोधः श्रेष्ठोऽन्यो मध्यमो वाऽधमो भवेत् ॥ ५०९

* * *

पुरपालकसङ्घेन नियुक्ता अधिकारिणः ।
यत्रान्धकारस्तत्रैव दीपान् संस्थापयन्ति हि ॥ ५१०

एवं दैवांशजा लोके महान्तः पुरुषा अपि ।
अज्ञानं यत्र तत्रैव ज्ञानव्याप्तिं प्रकुर्वते ॥ ५११

प्रभवन्ति तथा कर्तुं दैवेनैव नियोजिताः ।
रोगिक्षेमाय वैद्योऽस्तीत्युक्तं च क्रीस्तुना पुरा ॥ ५१२

* * *

अलिप्ते त्रपुषा पात्रे सम्यक्पक्वानि यद्यपि ।
शाकान्याम्लरसाढ्यानि यथा गच्छन्ति हेयताम् ॥ ५१३

तथैव कोपाविष्टानां साधकानां च सुव्रत!
अनुष्ठानानि सर्वाणि हेयान्येव भवन्ति हि ॥ ५१४

* * *

आत्मनः शोधनं कार्यमित्याहुस्तत्त्वचिन्तकाः ।
केवलं पञ्चभूतानामुत्पत्तेर्विलयस्य च ॥ ५१५

इन्द्रियाणां च गणनं न भवत्यात्मशोधनम् ।
आत्मन्यात्मगुणास्सन्ति किं वाऽनामगुणा इति ॥ ५१६

शोधनं तु यदस्त्यङ्ग! तदेव ह्यात्मशोधनम् ।
मुक्तिं ददाति तदिदं व्यर्थमन्यद्विचारणम् ॥ ५१७

* * *

फलपल्लवपुष्पाद्यैर्भासमानोऽपि पादपः ।
मूले क्षीणे सति यथा फलादिरहितो भवेत् ॥ ५१८

तथा शमदमज्ञानसत्याद्यैरपि शोभितः ।
योगी शमादिहीनः स्याच्छीले नष्टे सति ध्रुवम् ॥ ५१९

* * *

निलये कस्यचित्पुंसो धर्मपत्नी च जारिणी ।
ऐकमत्येन संस्थातुं नैव पारयतो यथा ॥ ५२०

ब्रह्मनिष्ठे तथैकस्मिन् योगो मुक्तिप्रदायकः ।
भोगो वैषयिकश्चापि स्थातुं शक्नुवतो न हि ॥ ५२१

* * *

आतपे म्लानिमापन्नमादौ सस्यं पुनर्यथा ।
वर्षेण वृद्धिं संप्राप्य समग्रफलदं भवेत् ॥ ५२२

तथा सद्गुरुसान्निध्ये पूर्वं शिष्यः सुशिक्षितः ।
अखण्डज्ञानरूपेण फलेन भ्राजितो भवेत् ॥ ५२३

आतपस्पर्शरहितं सस्यं पूर्णफलप्रदम् ।
यथा न स्यात्तथा शिष्यो गुरुशिक्षाविवर्जितः ।
पूर्णज्ञानयुतो न स्यादेतत्तत्त्वं सदा स्मरेत् ॥ ५२४

* * *

समुद्रोपरिभागस्थास्तरङ्गैराहता झषाः ।
त्यक्त्वा निश्चलतां नीचैर्गच्छन्त्युपरि चासकृत् ॥ ५२५

समुद्रागाधभागस्था निश्चलास्तु भवन्ति ते ।
तथा दृश्ये जगत्यस्मिंस्थिता देहेन्द्रियादिके ॥ ५२६

सुखदुःखादिकैर्द्वन्द्वैस्ताडिताः स्युर्मुहुर्मुहुः ।
रमन्ते ये सदा द्रष्टुः सान्निध्ये स्वात्मनः पुनः ।
द्वन्द्वक्लेशविहीनास्ते लभन्ते निर्वृतिं पराम् ॥ ५२७

* * *

सेवकानां तु धर्मोऽयं यत्प्रभोरनुवर्तनम् ।
प्रभुद्रोहकृतो दण्ड्या निष्कास्या वा भवन्ति हि ॥ ५२८

आत्मानुवर्तनं धर्म इन्द्रियाणां तथैव हि ।
आत्मसौख्यविरुद्धेषु विषयेषु निमज्जताम् ॥ ५२९

शिक्षणं वाऽपनयनं देहात्तेषां विधीयताम् ।
यस्तथा कुरुते तेनैवात्मसौख्यमवाप्यते ॥ ५३०

* * *

जलेऽनिले च सूक्ष्मास्तु जीवास्सन्ति सहस्रशः ।
विना यन्त्रसहायं ते शक्यन्ते नावलोकितुम् ॥ ५३१

तथा सर्वेश्वरो भाति सर्वेषु परमाणुषु ।
परं तु दृश्यते सोऽयं न विना दिव्यचक्षुषा ॥ ५३२

प्रकृत्यतीतावस्था तु यस्यान्तःकरणे भवेत् ।
द्रष्टुं स एव शक्नोति सर्वव्यापिनमीश्वरम् ॥ ५३३

अतीन्द्रियज्ञानसिद्धिमृष्यवस्थां च ये नराः ।
प्राप्नुवन्तीह ते सर्वे सर्वेशं द्रष्टुमीशते ॥ ५३४

* * *

अन्तकालेतु जीवस्य दशां दृष्ट्वा स कां गतिम् ।
प्राप्स्यतीति विनिश्चेतुं शक्यते प्रायशोऽनघ! ॥ ५३५

दुःखतप्तस्त्यजन् देहं नरकं स गमिष्यति ।
सन्तोषभरितस्तावत्स्वर्गलोकमुपैष्यति ॥ ५३६

नामसङ्कीर्तनपरस्संतोषातिशयान्वितः ।
उपास्यशिवविष्णवादिदेवलोकान् प्रयास्यति ॥ ५३७

ज्ञेयैकस्थितिमापन्नो ब्रह्मभावसमन्वितः ।
शरीरं सन्त्यजन् देही जीवब्रह्मैक्यमाप्स्यति ॥ ५३८

स्थितिरेषा तु सामान्या भवतीति विचिन्तयेत् ।
जीवतो या स्थितिर्जाता दशां तदनुसारिणीम् ।
अवश्यं लभते प्राणी माऽस्तु ते संशयोऽत्र भोः ॥ ५३९

* * *

सन्ति मेधाविनः केचिज्जगत्यां न्यायवादिनः ।
ये ज्ञात्वाऽपि निजं पक्षमधर्मं धनलिप्सया ॥ ५४०

न्यायस्थाने स्वकं वादं समुपस्थापन्त्यहो ।
तथैव साधकाः केचित् ब्रह्मनिष्ठापथानुगाः ॥ ५४१

कार्येष्वधर्मशीलेषु प्रविष्टाः स्वार्थचिन्तया ।
धर्मापेतां प्रवृत्तिं स्वां जानन्तोऽप्यनये स्थिताः ॥ ५४२

बहुशास्त्रप्रमाणानि दृष्टान्तान् युक्तिसन्ततिम् ।
निरूपयन्ति; प्रारब्धमनिवार्यं वदन्ति च ॥ ५४३

श्रुत्वा तद्वचनं शङ्कां न भजन्तु मुमुक्षवः ।
अनर्थायैव सर्वेषामधर्मनिरतिर्भवेत् ॥ ५४४

आत्मशुद्धेरभावाद्धि भवत्येतादृशी स्थितिः ।
पश्चात्तापेन सन्तप्ताः कृपया परमात्मनः ॥ ५४५

परिशुद्धा भवन्त्येव पतन्त्यन्ये भवार्णवे ।
प्रारब्धमिदमित्येवं कथयन्तो जडाशयाः ॥ ५४६

सत्प्रयत्नविहीनाश्च भवन्ति पतिताः क्रमात् ।
अतीतज्ञानिनां ब्रह्मसाक्षात्कारवतां किल ॥ ५४७

प्रारब्धमस्ति ये तावदत्यन्तं विरळा भुवि ।
तदन्येषां तु विषये प्रारब्धं नानुवर्तते ॥ ५४८

* * *

कुर्वन्ति भगवत्कार्यं फलमुद्दिश्य ये जनाः ।
ईश्वरांशभवत्वेन संभाव्यन्ते न ते भुवि ॥ ५४९

फलापेक्षां परित्यज्य दैवकार्यं तु पावनम् ।
जपध्यानादियोगांश्च निर्वहन्तीश्वरांशजाः ॥ ५५०

भृतिं कदाऽपि नादत्ते स्वकार्यनिरतो नरः ।
श्रद्धया परया कार्यं निर्दुष्टं च करोत्यसौ ।
भृत्यर्थमेव कुर्वन्ति कर्माण्यन्ये तु मानवाः ॥ ५५१

* * *

श्रेयोऽर्थिभिर्जनैस्सर्वैः स्वनिष्ठायै हितं तु यत् ।
तदेव कार्यं कर्तव्यं न कदाऽप्यहितावहम् ॥ ५५२

धर्महीनानि कार्याणि सर्वाण्यपि पुरोगतेः ।
अन्तरायकराण्येव भवन्त्यत्र न संशयः ॥ ५५३

धर्मयुक्तानि कार्याणि श्रेयोमार्गनिरोधकान् ।
प्रत्यूहानपनीयाथ साधयन्ति पुरोगतिम् ॥ ५५४

अनुकूलोऽनिलो नावं गम्यं गमयति द्रुतम् ।
स एव प्रतिकूलश्चेत् तद्गतिं निरुणद्धि हि ॥ ५५५

तस्मात्त्रिकरणैस्सर्वे हितमेवाचरन्तु भोः ।
वाचं वाक्शुद्धिहीनस्य विश्वसन्ति न वै जनाः ॥ ५५६

मनःशुद्धिं विना स्वल्पः सङ्कल्पोऽप्यफलो भवेत् ।
कार्यं स्वल्पमपि व्यर्थं कायशुद्धिं विना कृतम् ॥ ५५७

* * *

मेघात्समुद्रादुत्पन्नाद्वृष्टिरूपेण भूतले ।
पतितं सलिलं यद्वन्निम्नभूमौ प्रधावति ॥ ५५८

समुद्रप्राप्तिपर्यन्तं याति विश्रमणं विना ।
तथैव प्रकृतेर्योगाज्जीवरूपं महेश्वरात् ॥ ५५९

प्राप्ता मुमुक्षुवो भूय ईश्वरत्वोपलब्धये ।
विना विश्रान्तिमुद्युक्ता निष्ठां कुर्युः सदैव हि ॥ ५६०

कालः शुभः स्थलं श्रेष्ठं किमित्यनवलोक्य हि ।
सलिलं सागरं याति प्राप्तकालस्थलानुगम् ॥ ५६१

तथैव ब्रह्मनिष्ठोऽपि कालस्थलविशुद्धताम् ।
अनादृत्य सदा यत्र कुत्रापि स्यात्समाहितः ॥ ५६२

*   *   *

उद्दिष्टानि सुषुप्तेस्तु प्रबोधयितुमेव हि ।
प्रायेण सर्वशास्त्राणि प्रपञ्चे सर्वमानवान् ॥ ५६३

तथाऽपि शास्त्रेष्वस्माकं शक्तिद्वयमवस्थितम् ।
शक्तिरेका कुलं लिङ्गं चाश्रित्यैव प्रवर्तते ॥ ५६४

नरं सुषुप्त्यवस्थातो मूर्छां गमयति ध्रुवम् ।
नैवानुसरणीयाऽसौ यया पापं प्रवर्धते ॥ ५६५

अन्या सुषुप्तितो जाग्रदवस्थां प्रापयत्यथ ।
तुरीयां तदतीतां च दशां नयति मानवान् ॥ ५६६

इयं शक्तिर्गुणानेव मनुजस्य तु पश्यति ।
न कुलं न च लिङ्गं च योग्यतायास्तु निर्णये ॥ ५६७

इयं पुण्यावहाऽनेकमहापुरुषसम्मता ।
अनुत्तमेषु ग्रन्थेषु चानेकेषु निरूपिता ॥ ५६८

यतो नानुसृता सेयं लोकेऽस्मिन् बहुभिर्जनैः ।
तत एवास्य लोकस्य संजाताऽसावधोगतिः ॥ ५६९

*   *   *

शिष्यः किं मदनुष्ठाने षोडशांशं समाचरेत् ।
इत्येवं सततं पश्येद्गुरुश्शिष्यं दयापरः ॥ ५७०

अनुष्ठानं चरिष्यामि गुरोस्तु द्विगुणीकृतम् ।
इत्येवं श्रद्धया भक्त्या शिष्यो निष्ठापरो भवेत् ॥ ५७१

गुरोःस्थानमवाप्नोति शिष्यस्तादृश एव हि ।
अनुत्तमाविति प्रोक्तौ गुरुशिष्यौ तथाविधौ ॥ ५७२

* * *

अनुष्ठानपराश्शिष्याश्चात्मशुद्धिसमन्विताः ।
अर्हन्ति सद्गुरोः पीठमधिष्ठातुं महात्मनः ।
सम्पादयेद्गुरोरात्मशक्तिं शिष्योऽपि निष्ठया ॥ ५७३

* * *

निस्सारान्विषयांस्त्यक्त्वा ससारां दैवभावनाम् ।
गृह्णन्ति ये गृहस्थास्ते पूज्यास्सन्न्यासिवज्जनैः ॥ ५७४

* * *

तपश्चराम्यहं प्राणायामं च विदधाम्यहम् ।
इति दम्भाभिमानोऽपि तं बध्नात्यभिमानिनम् ।
तथाविधोऽभिमानी तु मिथ्याचारीति कथ्यते ॥ ५७५

* * *

आध्यात्मिकपथेऽन्योन्यसाहाय्यं दुश्शकं नृणाम् ।
अनुष्ठेयमनुष्ठाय संतरेत्साधकः स्वयम् ॥ ५७६
गुरवः केवलं मार्गं दर्शयन्ति दयाळवः ।
शिष्यैरेव प्रयाणं तु कर्तव्यं तत्र सश्रमम् ॥ ५७७

* * *

दृष्टिरज्ञानदृष्टिश्च ज्ञानदृष्टिस्तथैव च ।
विज्ञानदृष्टिरित्येवं त्रिविधा दृश्यते भुवि ॥ ५७८

अज्ञानदृष्टिस्सा स्याद्या कुलमेव प्रपश्यति ।
ज्ञानदृष्टिस्तु सा प्रोक्ता या गुणानेव पश्यति ॥ ५७९

या तु सर्वगतं पश्यत्यनन्तं परमेश्वरम् ।
विज्ञानदृष्टिरिति सा प्रोच्यते तत्त्ववेदिभिः ॥ ५८०

साधनीयाऽन्ततो गत्वा ज्ञानदृष्टिर्यया विना ।
नृणां विषयदृष्टिस्तु नैव नश्यति सोदर! ॥ ५८१

* * *

कुल्याद्वारा बहिर्याति जलं यदि तटाकतः ।
प्रविशन्ति तटाकं तं तद्द्वारा जलजन्तवः ॥ ५८२

हृदयादिन्द्रियद्वारा बहिर्याति मनो यदि ।
तद्द्वारैव विशन्त्यन्तः प्रापञ्चिकगुणा अपि ॥ ५८३

ओङ्काररहितो मन्त्रः प्राणवर्जितदेहवत् ।
कळाविहीनो भवति प्राण ओंकार उच्यते ॥ ५८४

* * *

दीर्घं शान्तमथ ध्यानमोंकारस्य समाचरेत् ।
ध्येयाकारस्य संप्राप्तिर्भवेच्छीघ्रं तथाकृते ॥ ५८५

घण्टानादो यथा लीनो भवति क्रमशस्तथा ।
मनोऽपि लीनमोङ्कारध्याने कुर्याच्च साधकः ॥ ५८६

* * *

ऋणमोचनमाकाङ्क्षन् ऋणग्रस्तो जनो यदि ।
उत्तमर्णाय यत्किंचिद्धनं प्रत्यर्पयन् क्रमात् ॥ ५८७

ऋणं नूत्नतया नैव स्वीकरोति पुनस्तदा ।
ऋणात्सर्वात्मना मुक्तो भवत्येव न संशयः ॥ ५८८

तथैव साधकः स्वस्य हृदये कृतसंश्रयाः ।
एकैकशः पूर्ववृत्तीः क्रमशः संपरित्यजन् ॥ ५८९

प्रवेशं नूत्नवृत्तीनां निरुणद्धि यदा तदा ।
दैवभावे स्थितस्सोऽयं मुक्तिमाप्नोति सत्वरम् ॥ ५९०

* * *

अतिभारावहं नानावस्तुजातं महार्णवे ।
वहन्तीं तरणिं दृष्ट्वा विवेकरहितैर्जनैः ॥ ५९१

उडुपे तादृशो भारो यदि निक्षिप्यते तदा ।
जले निमज्जनं तस्य ह्यवशं संभवेत्किल ॥ ५९२

महाप्रवक्तृभिर्लोके क्रियमाणान्यनेकशः ।
विलोक्य घनकार्याणि सामान्यस्तादृशं यदि ।
प्रयत्नं कुरुते तस्य वैयर्थ्यं भवति ध्रुवम् ॥ ५९३

* * *

मलावरणविक्षेपदोषैर्मुक्ते विनिर्मले ।
हृदये साधकानां तु जायते दैवदर्शनम् ॥ ५९४

सूर्यस्य कान्तौ सर्वत्र व्याप्तायामपि भूतले ।
सूर्यकान्तमणावेव सूर्यो ज्वलति पश्यत ॥ ५९५

चराचरजगद्व्याप्तो वर्तते यद्यपीश्वरः ।
शुद्धान्तःकरणे साधुजनानामेव भात्यसौ ॥ ५९६

सर्वेषां साधनानामप्यतिमुख्यं प्रयोजनम् ।
शुद्धान्तःकरणप्राप्तिरिति ज्ञेयं मुमुक्षुभिः ॥ ५९७

* * *

अनुष्ठानं समाप्यैव भोक्तव्यं साधकैर्जनैः ।
मोक्षद्वारं तु विवृतं तादृशेभ्यो भवेद्ध्रुवम् ॥ ५९८

मन्तव्यं भोजनं दैवप्रसाद इति चात्मनि ।
दैवपूजामकृत्वैव यो भुङ्क्ते स तु नास्तिकः ॥ ५९९

विनैव पूजां केनापि हेतुना भोक्तुमुद्यतः ।
ध्यायेदेकाग्रचित्तेन परमात्मानमात्मनि ॥ ६००
भोजनावसरेऽन्येद्युस्तं लोपं पूरयेदपि ॥

* * *

सत्यवैराग्यशान्त्यादिसद्गुणैरुपशोभिताः ।
चतुष्टयेन चोपेतास्साधनानां बुभुत्सवः ।। ६०१

अध्यात्मविद्यामध्येतुं भवन्ति ह्यधिकारिणः ।
पुरा दैवगुणोपेतानृषीनाराध्य भूभुजः ।। ६०२

श्रुत्वा तेभ्योऽखिलान् धर्मान्प्रीत्या तदनुसारिणः ।
राज्यानि पालयामासुः श्रीकृष्णोऽपि तथाविधम् ।। ६०३

मत्वाऽर्जुनं कुरुक्षेत्रे ब्रह्मतत्त्वमुपादिशत् ।
तादृशी योग्यता कुत्रास्त्यधुनातनसाधुषु? ।
तत एव न मान्यन्ते तेऽधुना राज्यपालकैः ।। ६०४

*　　　　*　　　　*

पिपासुः किं जलं सर्वं तटाकस्थं पिबत्यथ ।
क्षुधार्तः किं समस्तान्नमश्नाति भुवने स्थितम् ।। ६०५

रोगी किं सेवते सर्वाण्यौषधानीह मानवः ।
तेषां परमितैरेव सलिलान्नौषधैरलम् ।। ६०६

तथैव सर्वशास्त्राणां पठनं न ह्यपेक्ष्यते ।
सारांशस्यैव पठनं चानुष्ठानं विधीयताम् ।। ६०७

तथाकृते भविष्यन्ति धन्या मुक्ताश्च साधकाः ।
'यावानर्थ उदपान' इत्यादिवचसा पुरा ।
वासुदेवेन गीतासु तत्त्वमेतदुदीरितम् ।। ६०८

*　　　　*　　　　*

करणत्रयशुद्धिः किं संजातेत्यात्मनि स्वयम् ।
साधकैर्ध्यानसंलग्नैः कर्तव्यं परिशीलनम् ।। ६०९

तस्याश्शुद्धेरभावस्तु फलसिद्धेर्निरोधकः ।
इति विज्ञाय तत्सिद्ध्यै प्रयत्नं सन्ततं कुरु ।। ६१०

यावन्न शुद्धिस्सा सिद्धा तावद्योगस्तपस्तथा ।
भक्तिश्च साधकस्यात्र न भवन्ति फलप्रदाः ॥ ६११

जलं च फेनकं वस्तु परिशुद्धे न चेत्तथा ।
धावनं चासमग्रं चेद्वस्त्रं शुभ्रं भवेन्नहि ॥ ६१२

तथैव वाक्क्रिया चित्तं संशुद्धानि न चेत्तदा ।
साधकोऽपि पवित्रात्मा न भवेदिति भावयेत् ॥ ६१३

वागादीनां विशुद्धानां संपुटो योग उच्यते ।
तस्य योगस्य संसिद्ध्यै यत्नं कुर्यात्सदैव हि ॥ ६१४

* * *

येषु भक्तिजलं चाथ वैराग्याग्निस्समुज्ज्वलः ।
स्यातां समृद्धौ ते धन्या मोक्षमार्गानुयायिनः ॥ ६१५

उपैति धूमशकटं जलानलसमृद्धिमत् ।
गम्यं सपदि तद्वच्च मोक्षं तेऽपि मुमुक्षवः ॥ ६१६

* * *

कर्मयोगज्ञानयोगौ बहुक्लेशकरौ मतौ ।
द्वावप्येतौ समौ प्रोक्तौ तथा तुल्यफलप्रदौ ॥ ६१७

अपेक्ष्यते सदा कार्यशूरत्वं कर्मयोगिनः ।
ज्ञानयोगे तथा बुद्धिशुद्धिर्ग्रहणपाटवम् ॥ ६१८

चित्तस्यैकाग्रता तस्य संयमश्चाप्यपेक्षिताः ।
कर्मयोगे तु मुख्यः स्याद्देहेन्द्रियविनिग्रहः ॥ ६१९

निग्रहो ज्ञानयोगे च मानसेन्द्रियसन्ततेः ।
तत एव च शास्त्रेषु विविधेषु शमो दमः ।
अनुष्ठेयाविति प्रोक्तौ तत्त्वविद्भिः पुराऽनघ! ॥ ६२०

यत एतावुभौ मार्गौ दुर्गमौ तत एव हि ।
सामान्यानां कृते भक्तिध्यानयोगावुदीरितौ ॥ ६२१

पूर्वोक्तयोगाविव यौ नैव क्लेशकरौ मतौ ।
साध्यः प्रज्ञावतामेव ज्ञानयोगो विशेषतः ।। ६२२

यत्र दृश्यमदृश्यं चाप्यदृश्यं दृश्यमेव च ।
कर्तव्यं स्या; त्ततो वेद्यं दुस्साधमिति तद्बुधैः ।। ६२३

* * *

संसारकार्यसक्तः किं ज्ञानं नाप्नोति मानवः?।
इति प्रायेण पृच्छन्ति स्वल्पानुष्ठानतत्पराः ।। ६२४

तथा स्यान्नाम प्रारम्भदशायां तु ततः परम् ।
यदा मुमुक्षुर्विशति पूर्णनिर्वाणसुस्थितिम् ।
तदा तदुक्तया रीत्या विधातुं नैव शक्यते ।। ६२५

द्विविधं पाकमेकस्मिन् पात्रे कर्तुं किमेकदा ।
प्रभुर्भवति यः कोऽपि तद्वदेवेदमूह्यताम् ।। ६२६

* * *

बहुकालमनावृष्ट्या पीडिते जगतीतले ।
कदाचित्पूर्णया वृष्ट्या यथा लोकः प्रहृष्यति ।। ६२७

तथा चिरमनुष्ठानं विधायाप्यतिदुःखितः ।
ज्ञानाप्राप्त्या; भगवतः कृपापात्रं भवेद्यदि ।। ६२८

एकेनैव निमिषेण सर्वदुःखविवर्जितः ।
अमोघं वर्णनातीतं ब्रह्मानन्दमवाप्स्यति ।। ६२९

* * *

अश्वत्थादिमहीजानां कोटरेषु समुत्थिताः ।
अन्ये वृक्षाः परां वृद्धिं गता मूलमहीरुहान् ।। ६३०

नाशयित्वा स्वयं यद्वत् स्थैर्यं यान्ति तथैव हि ।
हृदि दैवमये जाता दुर्गुणा विस्तृतिं गताः ।।
दैवभावं समुत्सार्य प्रतिष्ठां यान्ति हि स्वयम् ।। ६३१

मूलवृक्षे समुत्पन्नो वृक्षो यद्यपनीयते ।
सपद्येव तदा तस्य तरोर्हानिर्न जायते ॥ ६३२

तथैव दुर्गुणो जातस्सद्यो यद्यपनीयते ।
हृदयात्तर्हि नैव स्याद्दैवभावस्य संक्षयः ॥ ६३३

मया कदाचिद्वर्षासु वातोद्रिक्तासु वीक्षितः ।
अधः पतन्महान् कश्चिदश्वत्थो दळितो द्विधा ॥ ६३४

तन्मध्ये पर्कटीवृक्षो यतो जातस्ततः किल।
ईदृशी गतिरस्येति सत्यं तद्विदितं मया॥ ६३५

* * *

आकाशमण्डले मेघव्याप्तिर्वर्षागमं यथा ।
पुष्पोद्गमस्तरूणां च फलानां संभवं यथा ॥ ६३६

अरुणस्योदयः प्राच्यां दिशि सूर्योदयं यथा ।
सूचयन्ति; तथा भक्तिः करुणा शान्तिरेव च ॥ ६३७

तीव्रा च ब्रह्मजिज्ञासा सञ्जाता हृदयेऽमले ।
जीवस्य देवभावाप्तिं नेदिष्ठां निर्दिशन्ति वै॥ ६३८

* * *

निद्रादशायां यत्किञ्चिदस्वाधीनेन्द्रियो जनः ।
प्रलपत्यथ किं प्रोक्तं त्वयेति श्रोतृभिर्जनैः ॥ ६३९

पृष्टश्चेत्तदहं नैव जानामीति ब्रवीति च ।
प्रलापकाले ये तत्र निद्रिता इतरे जनाः ॥ ६४०

तेऽपि तत्र विजानीम इत्येव कथयन्ति हि ।
सदाचरणमात्मानुभवो वा नास्ति येष्विह ॥ ६४१

तेषां तावदुपन्यासाश्शास्त्राध्ययनमेव च ।
नोपयोगाय कल्पन्ते स्वेषां श्रोतृजनस्य च ॥ ६४२

* * *

यस्य सत्यं च धर्मश्च भवेत्पादद्वयं तथा ।
हस्तद्वयं भवेद्यस्य त्यागो वैराग्यमेव च ॥ ६४३

हंसमन्त्रो भवेद्यस्य श्वासो निश्श्वास एव च ।
यस्सदा परमात्मानं भावयेदात्मनो हृदि ॥ ६४४

स एव निर्भयो लोके निरङ्कुशसुखं व्रजेत् ।
निधानं च भवेत्सोऽयं निरावरणतेजसः ॥ ६४५

* * *

कारागारे निबद्धस्तु बहिर्गन्तुं यतेत चेत् ।
नैवानुमन्यते यातुं तत्रत्यैरधिकारिभिः ॥ ६४६

तथैव कर्मशेषेण निबद्धस्साधको जनः ।
निर्विकल्पसमाधिं चेत्प्रवेष्टुं यततेऽनघ! ॥ ६४७

सङ्कल्पैर्वृत्तिभी रोगैस्तत्प्रयत्नो निषिध्यते ।
निर्विकल्पसमाधिस्तु नित्यसौख्यालयो मतः ।
नैव तत्रावकाशः स्यात्कर्मशेषानुभुक्तये ॥ ६४८

* * *

गङ्गया सङ्गते भूत्वा यमुना च सरस्वती ।
त्रिवेणीरूपमास्थाय प्रयातः काशिकां प्रति ॥ ६४९

दिव्यं वाराणसीक्षेत्रं स्पृष्ट्वा गत्वा ततःपरम् ।
तिस्रोऽपि सरितो यान्ति लयं पूर्वमहोदधौ ॥ ६५०

तथा भक्तिर्विरक्तिश्चाप्यात्मज्ञानेन सङ्गते ।
ईश्वराभिमुखं गत्वा लब्ध्वा दैवसुखं ततः ॥ ६५१

ज्ञानानन्दमयेनैक्यं प्रयातः परमात्मना ।
ज्ञानेनैक्यं गतं सर्वं साधनं मुक्तिदं भवेत् ॥ ६५२

* * *

सूक्ष्मात्सूक्ष्मतरामेवं दशां सूक्ष्मतमामपि ।
यदेन्द्रियाणि गच्छन्ति गोचरीक्रियते तदा ॥ ६५३

दैवज्ञानं यदत्यन्तं सूक्ष्ममित्यभिधीयते ।
किं च बुद्धिर्विशाला स्याद्विशुद्धा च भवेत्ततः ।
घनीभूतपदार्थस्य द्रवत्वं यदि जायते ॥ ६५४

द्रवीभूतस्य च पुनर्वायुत्वं चाग्नियोगतः ।
आकाशे सुविशाले हि तस्य व्याप्तिर्भवेदहो ॥ ६५५

सूक्ष्मज्ञानं क्रमेणैवं सूक्ष्मात्सूक्ष्मतरं च सत् ।
भवेदतीन्द्रियज्ञानं ब्रह्मानुभवकारणम् ॥ ६५६

*   *   *

अनुकूला भवेयुश्चेज्जलान्नस्थलवायवः ।
तदा ध्यानाद्यनुष्ठानं सुकरं देहधारिणाम् ॥ ६५७

त एव प्रतिकूलाश्चेद्भवेयुः प्रतिबन्धकाः ।
ध्यानादीनां निरुत्साहबुद्धिमान्द्यविधायकाः ॥ ६५८

तथैव साधकस्यापि फलापेक्षाविवर्जितम् ।
ध्यानादिकस्यानुकूलं दैवकार्यं भवेद्ध्रुवम् ॥ ६५९

किं तु दुष्टगुणाः क्रूरः स्वभावो द्रोहवृत्तयः ।
भवन्ति ध्याननिष्ठायाः प्रतिकूलाः किलानिशम् ॥ ६६०

*   *   *

कृषिकर्मसमर्थेन वृषेणान्येन योजितः ।
यथा वत्सतरस्तत्र नैपुण्यं लभते तथा ॥ ६६१

मुमुक्षुस्साधुनाऽन्येन सदनुष्ठानशालिना ।
संयुक्तः साधनाभ्यासं कृत्वा सत्साधको भवेत् ॥ ६६२

*   *   *

यः कश्चिच्छाकपाको वा क्षीरान्नं वा तथेतरत् ।
सर्वैः पदार्थैस्संपन्नं पाचकोत्तमसाधितम् ॥ ६६३

हृद्यं यथा भवेत्तद्वत्सर्वसद्गुणशोभितः ।
शिष्यः सद्गुरुदेवेन शिक्षितः शोभते भृशम् ॥ ६६४

सामग्रीलोपभूयिष्ठस्सूदेनाकृतिना कृतः ।
यथा रुचिकरो न स्यात्पदार्थस्तु तथैव हि ॥ ६६५

गुणहीनः सदाचार्यशिक्षयाऽपि विवर्जितः ।
यश्शिष्यस्स तु लोकेऽस्मिन्न भवेत्साधुसम्मतः ॥ ६६६

* * *

सर्वकारस्य वै शाखास्वेकशाखाधिकारिणः ।
शाखान्तरस्य कार्येषु न विशन्ति यथा तथा ॥ ६६७

सत्येऽपि लोकविषये स्वसंबन्धविवर्जिते ।
प्रवेशो नैव कर्तव्यो ब्रह्मनिष्ठेन साधुना ॥ ६६८

उपेक्षैकतमा प्रोक्ता मैत्र्यादिकचतुष्टये ।
संसेव्या ब्रह्मनिष्ठेन या लोकविषये सदा ॥ ६६९

परं तु ब्रह्मनिष्ठानां पर्याप्तबलशालिनाम् ।
अधर्मनिग्रहस्तावद्धर्म एवेति भावयेत् ॥ ६७०

* * *

ज्ञानाग्निः प्रज्वलत्यस्मास्वमोघः सर्वभक्षकः ।
यत्किञ्चिदग्नौ प्रक्षिप्तं भस्मीभावं गमिष्यति ॥ ६७१

अतोऽस्माकं न सन्त्येव पुण्यं पापं शुभाशुभे ।
इति केचिद्वदन्त्येतत्सत्यमेव न संशयः ॥ ६७२

यदग्नौ वस्तु निक्षिप्तं भस्मीभूतं भवेदिति ।
किन्तु "ज्ञानाग्निरस्मासु बाढं ज्वलति वा न वा" ॥ ६७३

इति किं तैः सुनिशितं कृतमात्मपरीक्षणम्?
इत्येवं संशयस्तावज्जिज्ञासूनां प्रजायते ॥ ६७४

दहति प्रज्वलन्नग्निर्निश्शेषं वस्तुसञ्चयम् ।
दग्ध्वा तद्वस्तुसन्तत्यै स्वस्वरूपं ददाति च ॥ ६७५

वस्तूनां नावशिष्यन्ते शुद्धाशुद्धास्तु वासनाः ।
यदि तत्रावशेषः स्याद्दहनस्यासमग्रता ॥ ६७६

ज्ञायेतैवं स्वभावो वा प्रकृतेर्विषयस्य वा ।
वासना सावशेषा चेद् ज्ञानाग्नेर्ज्वलनं तदा ॥ ६७७

अपर्याप्तमिति ज्ञात्वा गुणैश्शमदमादिभिः ।
योगैर्ध्यनादिभिश्चाग्निं तं समुद्दीपयेत्पुनः ॥ ६७८

* * *

महात्मनो गुरोस्साधुसत्तमस्य च कस्यचित् ।
गत्वाऽन्तिकं सुधीः कश्चिच्छिष्यस्तं प्रणिपत्य च ॥ ६७९

"मनसश्चेन्द्रियाणां च निग्रहः क्लेशदायकः ।
कर्तव्यं किं मये" त्येवं पप्रच्छ विनयान्वितः ॥ ६८०

तच्छ्रुत्वा तमुवाचेत्थमाचार्यः करुणामयः ।
"साधारणैर्जनैर्जेतुमशक्यस्य नृपस्य हि ॥ ६८१

विजेता ख्यातिमाप्नोति महायोधाग्रणीरिति ।
महत्त्वं विद्यते किं वा सामान्यानां विनिग्रह?"॥ ६८२

मनसश्चेन्द्रियाणां च संयमो दुष्करो यतः।
ततस्साधारणास्तत्र वैफल्यं यान्ति पश्य भोः!॥ ६८३

अपि सर्वस्य लोकस्य जेतारश्चक्रवर्तिनः ।
पतन्ति पादयोस्तेषामृषीणां हि जितात्मनाम् ॥ ६८४

* * *

क्रियते चेन्न कर्तव्यं प्राप्यं न प्राप्यते फलम् ।
अल्पस्य महतो वाऽपि धर्मोऽयं सदृशो मतः ॥ ६८५

*　　　　*　　　　*

निशितेन कुठारेण महान्तोऽपि महीरुहाः ।
छिद्यन्ते नेतरेणैवमन्तःकरणवृत्तयः ॥ ६८६

सुस्थिरास्तीव्रवैराग्यबोधोपरतिभागिना ।
हृदा समूलमुच्छेत्तुं शक्यन्ते नान्यसाधनैः ॥ ६८७

*　　　　*　　　　*

विद्यार्थित्वमलब्ध्वैव न कोऽपि गुरुतां व्रजेत् ।
पूर्वं विद्यार्थिनो भूत्वा भवन्ति गुरवस्ततः ॥ ६८८

उन्नतोद्योगिनस्सन्ति ये तावदधुना भुवि ।
तैः प्राग्विद्यालये सर्वैरधीतमिति पश्यत ॥ ६८९

समीपे ब्रह्मनिष्ठानां शिष्यत्वं न व्रजन्ति ये ।
प्रबोधकगुरुत्वं तु न तेषामुपपद्यते ॥ ६९०

*　　　　*　　　　*

## उपसंहारः

श्रीव्यासाश्रमनिर्मातुश्चराचरसुखार्थिनः ।
सद्गुरोरुपदेशोऽयं सतामस्तु सदा मुदे ॥ ६९१

क्व सर्वज्ञो गुरुस्सोऽयं क्व चाहं मन्दधीरहो! ।
मयाऽनुवक्तुं किं शक्यमिदं तत्कृपया विना? ॥ ६९२

गुरोर्यस्य प्रसादेन संस्कृतं पठितं मया ।
तस्योपदेशस्तेनैव वचसा समुदीरितः ॥ ६९३

एतादृशोपदेशास्तु गुरोस्सन्ति सहस्रशः ।
तत्रैकदेश एवात्र मयका संस्कृतीकृतः ॥ ६९४

अत्र लौकिकदृष्टान्तैस्तत्त्वं प्रोक्तमलौकिकम् ।
यस्य संश्रवणं पुंसामात्मोन्नतिकरं भवेत् ॥ ६९५

अपूर्वभावनाशक्त्या गुरुणा समुदीरितम् ।
आध्यात्मिकमिदं तत्त्वं स्मरणीयं पुनः पुनः॥ ६९६

पठन्तः पाठयन्तश्च बोधयन्तः परस्परम् ।
तदिदं तत्त्वमत्रोक्तं कृतार्थास्सन्तु मानवाः ॥ ६९७

मलयाळयतेस्सोऽयमुपदेशस्सुधोपमः ।
निबद्धस्सुरभारत्यां श्रवोऽलङ्कृतिरस्तु वः ॥ ६९८

सोऽहंभावमुपाश्रित्य हंसीभूतो गुरूत्तमः ।
मलयाळयतिर्नित्यं मानसे रमतां मम ॥ ६९९

मलयाळयतीन्द्राय गुरुदेवाय मङ्गळम् ।
मङ्गळं भक्तबृन्दाय नित्यश्रीर्नित्यमङ्गळम्॥ ७००

समाप्तोऽयं ग्रन्थः

SRI JAGADGURU VISHWARADHYA
JNANA SIMHASAN JNANAMANDIR
LIBRARY
Jangamawadi Math, Varanasi
Acc. No. ........5794..................

# OTHER BOOKS BY SAMUDRALA LAKSHMANAIAH

## *Biographies in Telugu*

1) Sri Malayala Swamy Jeevita Charitra
2) Sri Vidya Prakasananda Swamy Jeevita Charitra
3) Sri Karunyananda Swamy Jeevita Charitra
4) Charachara Sukhabhilashi

(All the above books were translated into English)

## *Commentaries in Telugu*

1) Annamacharya Sankeertanamrutam - Part -I & II
2) Andhra Maha Bharatha- Santhi Parva - 5th Canto
3) Veera Kshetra Mahatmyam

## *Translations into Telugu*

1) Yogavasistha - I, II & III Prakaranas
2) Raghuvamsa
3) Potana Bhagavatam - II Skandha (Bhavanuvada)
4) Bhartruhari Neethi and Vyragya Satakas
5) Hinduism - by Sri Aurobindo

## *Other Books*

1) Amaravani
2) Sri Malayala Sadguru Satakam
3) Sri Malayala Sadguru Stuthi
4) Sri Subrahmanyeswara Swamy Suprabhatam (Sanskrit)
5) Sri Timmamamba Suprabhatam (Sanskrit)
6) Dasakumara Charita Sushama
7) Kalyana Samskruti, 8) Savitri, 9) Madalasa
10) Vamadevudu, 11) Hindu Dharma Parichayam
12) Sri Vyasasrama Swarnostava Sameeksha etc.,

## H.H. Maharshi Sadguru Sri Malayalaswamiji

"Swamiji rendered yeoman service to humanity. He supported the devotees in all their travails and delivered happiness to them. His selfless and long services and noble teachings would be remembered eternally."

**-Bhagavan Satya Saibaba**

"His personal life was a Bhashyam for Bhagavadgita".....

**-Sri Swami Sivananda Saraswati Maharaj**

"Such a colossus in spritual world comes and serves the community but rarely. Malayalaswami was one such stupendous Saint of infinite blessings. He brought living Vedanta into the hearts of Telugu people through camps and lectures, books and journals, Asrams and Temples and Schools and Satsangs.

May this Maha-Tapaswin's blessings be upon us all."

**-Sri Swami Chinmayananda**

"Swamiji was a revolutionary, fighting against narrow casteism. He was imparting Vedic education to all. He was a great Saint and spiritual leader."

**- Sri Neelam Sanjeeva Reddy**

"A monarch amongst sages, H.H. Sri Malayala Swami is a Maharshi in Kaliyuga. When worship of God and righteousness were on the decline in South India, to resurrect and re-establish them in the country, was born Sri Malayalaswami."

**- M. Anantha Sayanam Iyengar**

Sri Samudrala Lakshmanaiah, author of this book, is a well known Sanskrit Scholar. He is an author of eminence on religious and literary topics with more than 30 books to his credit. Books like "Life History of Sri Malayalaswami" by him are very popular.